दुर्लभ बौद्ध ग्रन्थमाला—१

# गुह्यादि-अष्टसिद्धिसंग्रह

## གསང་བ་གྲུབ་པ་ལ་སོགས་པའི་གྲུབ་པ་སྡེ་བརྒྱད།།



भोट विद्या संस्थानम्


सम्पादक :

प्रो० सम्‌दोङ् रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक



दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी

बुद्धाब्द २५३१ ख्रीस्ताब्द १९८७

दुर्लभ बौद्ध ग्रन्थमाला—१

# गुह्यादि-अष्टसिद्धिसंग्रह

## གསང་བ་གྲུབ་པ་ལ་སོགས་པའི་གྲུབ་པ་སྡེ་བརྒྱད།།



भोट विद्या संस्थानम्

सम्पादक :

प्रो० सम्‌दोङ् रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक

**दुर्लभ बौद्ध ग्रन्थ शोध योजना**

**केन्द्रीय उच्च तिब्बती शिक्षा संस्थान**

सारनाथ, वाराणसी

बुद्धाब्द २५३१ ख्रीस्ताब्द १९८७

सहायक मण्डल
पं० जनार्दन पाण्डेय • डॉ० ठाकुरसेन नेगी
बनारसी लाल • महेन्द्ररत्न वज्राचार्य
वङ्छुग दोर्जे

मूल्य : सजिल्द : रु० ११५-००
अजिल्द : रु० ९०-००



प्रकाशक :
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी

मुद्रक :
शिवम् प्रिन्टर्स, इण्डियन प्रेस कालोनी,
मलदहिया, वाराणसी–२

**RARE BUDDHIST TEXT SERIES–1**

# GUHYĀDI-ASTASIDDHI-SAṄGRAHA



**भोट विद्या संस्थानम्**

*Editors :*

Prof. Samdhong Rinpoche
**Project Director**

Prof. Vrajvallabh Dwivedi
**Deputy Director**

**RARE BUDDHIST TEXT PROJECT**
**Central Institute of Higher Tibetan Studies**
**Sarnath, Varanasi**

**B.E. 2531** **C.E. 1987**

Co-Editors

Pt. Janardan Pandeya ● Dr. Thakur Sain Negi
Banarasi Lal ● Mahendra Ratna Vajracharya
Ven. Wangchuk Dorje

*Price* : *Rs.* Hard back Rs. 115/-
Paper back Rs. 90/-



*Published by* :
Central Institute of Higher Tibetan Studies,
Sarnath, Varanasi.

*Printed by* :
Shivam Printers
Indian Press Colony, Maldahiya, Varanasi-2

## प्रकाशकीय

अष्टसिद्धि-संग्रह नामक यह ग्रन्थ विभिन्न प्राचीन भारतीय सिद्ध आचार्यों द्वारा विरचित आठ तान्त्रिक शास्त्रों का संग्रह है। इनको परवर्ती आचार्यों की कृतियों में बहुधा उद्धृत पाया जाता है। इन आठ सिद्धियों में से आचार्य पद्मवज्रपाद विरचित 'अद्वयविवरणप्रज्ञोपायविनिश्चयसिद्धि' का तिब्बती अनुवाद उपलब्ध नहीं है।

इस ग्रन्थ के महत्त्व को देखते हुए स्व० प्रो० जगन्नाथ उपाध्याय जी के निर्देशन में संस्थापित संस्थान की दुर्लभ बौद्ध ग्रन्थ शोध-योजना द्वारा अनेक पाण्डुलिपियों से पाठ संकलन करने के बाद इसका परिष्कृत रूप प्रकाश में लाया जा सका है। इसके तिब्बती पाठ का मूल संस्कृत के साथ तुलनात्मक विवेचन करने का प्रयास किया गया है, जो समयाभाव के कारण पर्याप्त व यथेष्ट नहीं है। इसके दूसरे संस्करण में सुधार सहित आठवीं सिद्धि का तिब्बती अनुवाद भी प्रकाशित करने की कोशिश की जायगी।

मुझे पूर्ण विश्वास है कि इससे विद्वानों और शोधछात्रों को अध्ययन में पर्याप्त लाभ मिलेगा।

बुद्धाब्द २५३१
दिसम्बर २५, १९८७ ई०

भिक्षु समदोङ् रिनपोछे

3

गुह्यादि-अष्टसिद्धिसंग्रहे

इन्द्रभूतिविरचिता

# ज्ञानसिद्धिः

# JÑĀNASIDDHI

OF

INDRABHŪTI

( AN ANTHOLOGY OF GUHYA AND OTHER SIDDHIS )

तत्त्वनिर्देशः
रूपभावनानिषेधः
साकारनिराकरणम्
निराकारनिराकरणम्
मूढभावनानिषेधः
आश्वास-प्रश्वासतत्त्वप्रतिषेधः
महासुखप्रतिवर्णिकाप्रतिषेधः
पुण्यज्ञानसंभारप्राप्त्युपायः
पापपुण्योत्पादविनाशपरिज्ञाननिर्देशः
शुच्यशुचिकल्पनाविविक्तः
गम्यागम्यरहितः
तत्त्वस्थापनम्
गुरुलक्षणनिर्देशः
शिष्यलक्षणपरिच्छेदः
तन्त्रोक्ततत्त्वाक्षरपरनिदर्शनम्
उपायनिर्देशनम्
वज्रज्ञानाभिषेकविधिः
अधिमात्रेन्द्रियविधानम्
मध्येन्द्रियविधिनिर्देशः
मृद्विन्द्रियनिर्देशः

# ज्ञानसिद्धिः

**इन्द्रभूतिपादविरचिता**

**प्रथमः परिच्छेदः**

नमो वज्रसत्त्वाय

प्रणिपत्य जगन्नाथं [1]सर्वजिनवरार्चितम् ।
सर्वबुद्धमयं सिद्धिव्यापिनं गगनोपमम् ॥१॥

सर्वदं सर्वसत्त्वेभ्यः सर्वज्ञं वरवज्रिणम् ।
भक्त्याऽहं सर्वभावेन वक्ष्ये तत्साधनं परम् ॥२॥

अशेषयोगतन्त्रोक्तं वज्र[2]ज्ञानमनुत्तरम् ।
ये न जानन्ति मूढास्ते भ्रमन्तीह भवार्णवे ॥३॥

ये तु सत्त्वाः[3] समारूढाः सर्वसङ्कल्पवर्जिताः ।
ते स्पृशन्ति परां बोधिं जन्मनीहैव साधकाः ॥४॥

मुद्रामण्डलमन्त्राद्यैर्जापभावनतत्परैः ।
नैव सिद्धिं परां यान्ति कल्पासंख्येयकोटिभिः ॥५॥

रूपयौवनसम्पत्तेर्भोगैश्वर्यबलस्य च ।
जन्मगोत्रप्रवृत्तस्य न चित्ते मानमुद्वहेत् ॥६॥

मतिमान् पण्डितोऽस्मीति सर्वशिल्पकलासु च ।
कुशलः पार्थिवश्चाहमिति चित्ते न योजयेत् ॥७॥

शीलवान् श्रुतवान् वीरो [4]दानाद्यैरपि संयुतः ।
[5]स्वमुक्तेः परमुक्तेश्च नात्मानमुपलम्भयेत्[6] ॥८॥

---

१. सार्व–क. ग. । २. यान–क. ग., गृहीतः पाठस्तु भोटसम्मतः । ३. तत्त्वसमा–भो. ।
४. सेना क. ग., [रूपा]–मु. । ५. उक्तैरन्यैरनुक्तैश्च–क. ग. । ६. लभ्यते–मु. ।

सर्वसत्त्वमनोव्यापी वज्रसत्त्वः स्वयं स्थितः ।
इति संचिन्त्य योगात्मा न कञ्चिदव[1]कल्पयेत् ॥९॥

बाला मूर्खा दरिद्राश्च दुःशीला रोगपीडिताः ।
एवमाद्यैरनेकैश्च संयुक्तान् नावमानयेत् ॥१०॥

भक्तो रत्नत्रये श्राद्धो बोधिचित्तविभूषितः ।
सर्वसत्त्वानुकम्पी च [2]समयी संवरे स्थितः ॥११॥

[3]शक्रल्लोहितमांसं च बोधिचित्तविमिश्रितम् ।
महोदकसमायुक्तं भक्षयेत् तत्त्ववित् सदा ॥१२॥

नरश्वहयगोदीपं करिणां गर्दभस्य च ।
भक्षयेत् तत्त्वसिद्धयर्थं सर्वसङ्कल्पवर्जितम् ॥१३

घातयेत् त्रिभवोत्पत्तिं परवित्तानि[4] हारयेत् ।
कामयेत् परदारान् वै मृषावादमुदीरयेत् ॥१४॥

कर्मणा येन वै सत्त्वाः कल्पकोटिशतान्यपि ।
पच्यन्ते नरके घोरे तेन योगी विमुच्यते ॥१५॥

महोपायसमायुक्तो योगी लोकार्थकारकः ।
नाकार्यं[5] विद्यते तस्य सर्वसत्त्वजुगुप्सितम् ॥१६॥

प्रज्ञोपायसमायोगान्नास्ति पापं प्रकीर्तितम् ।
इत्युवाच स्वयं वज्री वज्रसत्त्वविकुर्वितः ॥१७॥

भक्ष्याभक्ष्यविनिर्मुक्तः पेयापेयविवर्जितः ।
गम्यागम्यविनिर्मुक्तो भवेद् योगी समाहितः ॥१८॥

प्रतीत्योत्पन्नसद्भावान् सर्वभावान् विचारयेत् ।
गतागतिविनिर्मुक्राननुत्पन्नान्[6] निरात्मकान् ॥१९॥

१. अवमान-भो. । २. समये-क. ग. भो. । ३. शुष्कलो-क. ग. मु. । ४. वित्तान्यप-क., चित्तात्प्रहा-ग. । ५. नाकारकं-ग. । ६. क्तोऽननु-ग. ।



मायोपमादिदृष्टान्तैर्योज्यते प्रतिजानता ।
अहं मम[1] विकल्पं च न कुर्याद् योगतत्त्ववित् ॥२०॥

सर्वव्यापी महावज्रः सर्वाकाशप्रतिष्ठितः ।
सर्वसत्त्वमनोव्यापी सर्वपुण्यमहोदयः ॥२१॥

अन्योन्यव्यापको वज्रः सर्वविल्लोकनायकः ।
एष[2] वज्रधरो राजा सर्वमन्त्रेषु वर्णितः ॥२२॥

गुरुप्रसादो यस्यास्ति स लभेत् तत्त्वमुत्तमम् ।
अन्यथा क्लिश्यते बालश्चिरकालविमोहितः ॥२३॥

गुरुर्बुद्धो भवेद् धर्मः सङ्घश्चापि स एव हि ।
प्रसादाज्ज्ञायते तस्य यस्य रत्नत्रयं [3]वरम् ॥२४॥

अज्ञानतिमिरान्धानामेष मार्गप्रदर्शकः ।
स भवेत् सर्वसौख्याग्र्यः[4] सर्वकामप्रदायकः ॥२५॥

धर्मगम्भीरनिष्ठात्मा विविक्तकरुणात्मकः ।
रत्नत्रयप्रतिष्ठार्थी[5] धर्मदाने निरामिषः ॥२६॥

स गुरुः शिष्यसंग्राही सर्वबुद्धानुकारकः ।
इत्युवाच जगन्नाथो नान्ये वै गुरवः स्मृताः ॥२७॥

यस्मान्न तत्समो ह्यस्ति पूजनीयो महामुनिः ।
तस्मात् सर्वप्रयत्नेन पूजयेद् गुरुवरं व्रती ॥२८॥

न[6] तत्समो विद्यते लोके मान्यो[7] न त्रिभवे जनः ।
वज्रसत्त्वः स्वयं लोके सर्वसंपत्तये स्थितः ॥२९॥

आराध्योऽनेकधा शिष्यैः सत्सम्पदमभीप्सुभिः ।
अक्षीर्ण[8]पुण्यकामैश्च सर्वविघ्नविनायकैः ॥३०॥

१. महा-क. । २. एकव-क. । ३. स्वयम्-क. भो. । ४. ग्रः-ग. । ५. ष्ठार्थो ग. । ६. न तत्स-क. ग. । ७. न्योऽन्यस्त्रि-ग. भो. । ८. अक्षीणः पु-ग. ।

सर्वेषां समयानां हि समयोऽयं निरुत्तरः ।
रक्ष्योऽयं भवता नित्यं सर्वसंपत्प्रदायकः ।।३१।।

लब्धुं[1] ज्ञानवरं दिव्यं सर्वसङ्कल्पवर्जितः[2] ।
वज्रज्ञानाभिषिक्तो हि साधयेद् बोधिमुत्तमाम् ।।३२।।

सम्यग् ज्ञानसमायुक्तो[3] लेख्य[4] मृण्मयमण्डले ।
गृह्णीयादभिषेकं चेत् समयाद् भ्रश्यते ह्यसौ ।।३३।।

समयभ्रंशतो[5] दुःखं[6] कायिकं मानसं तथा ।
अर्थनाशो भवेत् तस्य मरणं शीघ्रमेव च ।।३४।।

मृते च नारकं दुःखं कल्पकोटिशतान्यपि ।
अनुभूय यदोत्तिष्ठेत् चाण्डाले हीनजे कुले ।।३५।।

उत्पद्यते स मूढात्मा मूको वा विकलोऽथवा ।
जात्यन्धो हि भवेज्जातो जातौ जातौ न संशयः ।।३६।।

सर्वताथागतं ज्ञानं वज्रँज्ञानमिति स्मृतम् ।
तेनाभिषिक्तो मतिमानभिषिक्तोऽभिधीयते ।।३७।।

स योगी सर्वबुद्धात्मा सर्वदेवान्तिकैर्गणैः[8] ।
कृताञ्जलिपुटैर्भूत्वा[9] अभिवन्द्यो[10] जगत्पतिः[11] ।।३८।।

कुर्वन्ति रक्षणं वीरा बोधिसत्त्वा महाबलाः ।
बुद्धाश्चापि महात्मानो वज्रकायाः सदा स्थिताः ।।३९।।

सत्यधर्मपरो ह्येष बुद्धवर्त्मप्रवर्तकः ।
सगौरवाः प्रशंसन्ति अधिष्ठानसमन्विताः ।।४०।।

---

१. ब्धज्ञा–ग. । २. तम्–क. मु. । ३. युक्ते–ग. । ४. लेख्यं मिथ्या न मण्डले–क. ग. । ५. भ्रंशाद् भवेत्–क. ग. । ६. दुःखी–ग. । ७. यान–क. ग., गृहीतः पाठस्तु भोटसंमतः । ८. न्तिके गणैः–क. मु. । ९. पुटो भूत्वा–क. ग. । १० द्य–ग. । ११. पतिम्–ग. ।



लोकपालास्तथा चान्ये महाबलपराक्रमाः ।
सर्वस्थानगतस्यापि रक्षमाणाः प्रतिष्ठिताः ।।४१।।

ये चापि सर्वलोकेषु मारविघ्नाः प्रतिष्ठिताः ।
तेऽपि तस्य न कुर्वन्ति विघ्नं भीता प्रयान्ति च ।।४२।।

सर्वदेवादयः सिद्धाः सर्वाकाशचराचराः ।
न लङ्घयन्ति च तं तेऽप्यपायगतिभीरवः ।।४३।।
वीर्यस्य[1] ज्ञानविज्ञानसिद्धे[2]र्हानिर्भवत्यपि ।
यदि मोहवशादेव लङ्घयन्ति विमोहिताः ।।४४।।
सर्वज्ञो वरदो वादी वर्णसंस्थानके(कं) विना ।
गतागतिविनिर्मुक्तो अचाल्यः सर्ववायुभिः ।।४५।।
दह्यते नाग्निस्कन्धेन प्लाव्यते न जलेन च ।
भिद्यते नहि शस्त्रेण तीक्ष्णेनापि प्रयत्नतः ।।४६।।
अप्रतिष्ठं यथाकाशं व्यापि लक्षणवर्जितम् ।
इदं तत् परमं तत्त्वं वज्रज्ञानमनुत्तरम् ।।४७।।
ख्याता समन्तभद्रेति महामुद्रा च संज्ञिता ।
धर्मकायमिदं ज्ञेयमादर्शज्ञानमित्यपि ।।४८।।
प्रतिबिम्बं यथादर्शे स्वकीयं दृश्यते ध्रुवम् ।
धर्मकायं[3] तथा ज्ञानं[4] दृश्येतादर्शसंस्थितम्[5] ।।४९।।
सर्वताथागतं ज्ञानमात्मीयं[6] प्राणिनामपि ।
एकस्वभावसम्बोधो समताज्ञानमुच्यते ।।५०।।
आदिशुद्धमनुत्पन्नं प्रकृत्यैव प्रभास्वरम् ।
अन्योन्यव्यापकज्ञानात् प्रत्यवेक्षणकं स्मृतम् ।।५१।।

---

१. वीर्यं च–ग. । २ द्विहा–ग. । ३. कायस्त–क. मु. । ४. ज्ञाने–क. मु. । ५. स्थिते–क. मु. । ६. आत्मनः–क. मु. ।

सर्वत्र सर्वदा सर्वं बुद्धकृत्यप्रवर्तनम् ।
सर्वबुद्धैककार्यत्वात् [1]कृत्यानुष्ठानमुच्यते ॥५२॥

क्लेशज्ञेयावृतं सर्वं यदा मुक्तं भवेत् तदा ।
सुविशुद्धमिति ख्यातं वज्रिणां वरयोगिनाम् ॥५३॥

तथा[2] वैनेयधर्मेषु सर्वकामगुणेषु[3] च ।
सर्वबुद्धैकसंभोगात् कायः सांभोगिको मतः ॥५४॥

सर्वलक्षणसंयुक्तो नानाकायो ह्यलक्षणः ।
निर्मितत्वाच्च बुद्धानां कायो नैर्माणिको[4] मतः ॥५५॥

ज्ञात्वा तद्भावतो योगी महामुद्राप्रसिद्धये ।
सिद्धयते जन्मनीहैव सर्वसङ्कल्पवर्जितः ॥५६॥

महामुद्रेति विज्ञेया सर्वबुद्धमया शिवा ।
सिद्धा साऽनेकतन्त्रेषु [5]देशिता वरयोगिना ॥५७॥

[6]गर्भचङ्क्रमया(णा) यत्र क्षेत्रे क्षेत्रे प्रतिक्षणम् ।
सर्वताथागतं सम्यक् तत्र संधारयेद् व्रती ॥५८॥

कुमारक्रीडनं सर्वं शिल्पसंदर्शनं तथा ।
अन्तःपुरान्निष्क्रमणं मारधर्षणमेव च ॥५९॥

देवावतारणं चैव धर्मचक्रप्रवर्तनम् ।
महानिर्वाणसन्दर्भं[7] यच्चान्यत् सर्वक्रीडनम् ॥६०॥

सर्ववज्रमयं सर्वं योगी नित्यं प्रभावयेत् ।
नापूर्वं दृश्यते ह्यस्य नायोज्यं पूर्वसंस्थितम् ॥६१॥

१. कृत्वा–क. ग. । २. यथा–ग. । ३. गणेषु–क. मु. । ४. णको–ग. । ५. आश्रिता–भो. ।
६. गर्भचक्रं मा नयेच्च–क. मु. । ७. वर्णं संदृश्यं–क. मु. ।



सर्वताथागतं कृत्यं सर्ववज्रमयं शिवम् ।
त्रैकाल्यं [1]मार्गपर्यन्तं सर्वमेवावलोकयेत् ॥६२॥

सर्ववाग्विषयातीतं सर्वलक्षणवर्जितम् ।
ईदृशं चिन्तयेद् योगी सर्वबुद्धत्वदायकम् ॥६३॥

सर्वभूमिविनिर्मुक्तं कार्यकारणवर्जितम् ।
सिद्धवद्[2] भावयेद् योगी जन्मनीहैव सिद्धयति ॥६४॥

सर्वोपायविधिज्ञस्य योगिनः सर्ववज्रिणः ।
सिद्धयतेऽनुत्तरं तत्त्वं वज्रसत्त्ववचो[3] यथा ॥६५॥

स्थितः सुप्तो निषण्णश्च[4] चङ्क्रमेदथवापि च ।
भाषणे वज्रवाक्ये च वज्रसत्त्वत्वमावहेत् ॥६६॥

रूपशब्दरसस्पर्शानुपभुज्य[5] सदा व्रती ।
पूजां तु सर्वबुद्धानां करोमीति समारभेत् ॥६७॥

सत्त्वेभ्योऽपि [6]तदा दद्याद् [7]भक्तं वस्त्रादिकं तथा ।
अन्यद् वापि च यत् किञ्चित् तथैव विधिमाचरेत् ॥६८॥

नृत्यगीतैस्तथा वाद्यैः पुष्पमाल्यादिभूषणैः ।
स्रग्दामचामरैश्छत्रैः परात्मानं प्रपूजयेत् ॥६९॥

सुगन्धिगन्धलेपाद्यैरपि लिप्तं यथाविधि ।
आत्मानं पूजयेद् योगी सर्वबुद्धमनुस्मरन् ॥७०॥

व्रती वा मुण्डितो वाऽथ गृही वा सेवकोऽथवा ।
राजा वा सेवकाध्यक्षो यथाऽसौ रोचयेद् व्रती ॥७१॥

१. यत्–क. ग., यत्तु–मु., गृहीतपाठस्तु भोटसम्मतः । २. सिद्धं विभावयन्–क. मु. ।
३. वरो–क. ग. । ४. विवर्णश्च–क. । ५. न् भुञ्जयन्–क., न् भुञ्जयेत्–ग. । ६. यदा–ग. ।
७. भक्तव–क. मु. ।

तथासौ कुरुते योगी सर्वथा न प्रदुष्यति ।
सर्वकल्पविनिर्मुक्तो यथाकामक्रियाकरः ॥७२॥

सर्वभावस्वभावोऽसौ सर्वबुद्धमयो विभुः ।
स्वयम्भूः कामचारी च सर्वसत्त्वहृदि स्थितः ॥७३॥

भावयेत् [1]तत्त्वयोगी स सर्वतत्त्वमनुत्तरम्[2] ।
सर्ववज्रमयं सिद्धं लघुवज्रत्वमाप्नुयात् ॥७४॥

नात्र विघ्ना न [3]माराश्च सर्वे वश्या भवन्ति च ।
सर्वदुःखविनिर्मुक्तमात्मानं साधयेद् व्रती ॥७५॥

सिद्धचते सर्वबुद्धत्वं [4]दिनावधिविवर्जितम् ।
आत्मानं सर्वसंयुक्तं सदा [5]पश्येद् महाव्रती ॥७६॥

सर्वपूजाविशेषैश्च आत्मानं पूजयेत् सदा ।
अन्येभ्योऽपि तथा देयं वज्रसत्त्वमनुस्मरन् ॥७७॥

सर्वसत्त्वा[6]द्रंसद्भूतान् प्राणिनोऽपि विड्डुद्भवान् ।
संगृह्य च महायोगी भक्षयेत् तत्त्वसिद्धये ॥७८॥

महाप्रदीपसंयुक्तैः [7]समयेऽन्यैर्जुगुप्सितैः ।
पञ्चामृतं सदा भक्ष्यं पूज्याश्चैव तथागताः ॥७९॥

सर्वाङ्गकुत्सितायां वा न कुर्यादवमाननाम् ।
स्त्रियं सर्वकुलोत्पन्नां पूजयेद् वज्रधारिणीम्[8] ॥८०॥

अजातपुष्पसंयुक्तां बोधिचित्तसमन्विताम् ।
सेवयेत्[9] तत्त्वसिद्धचर्थं निर्विकल्पविधिस्थितः ॥८१॥

---

१. तत्त्वं–ग. । २. मनुस्मरन्–मु. । ३. मार्यश्च–ग. । ४. दिने विधि–मु. । ५. पश्यन्–क. मु. । ६. सत्त्वान्नसंभू–क. मु. । ७. समयैरन्यै–क. ग. । ८. रिणम्–क. । ९. भक्षयेत्–ग. भो. ।



चण्डालकुलसम्भूतां डोम्बिकां वा विशेषतः ।
जुगुप्सितकुलोत्पन्नां सेवयन्[1] सिद्धिमाप्नुयात् ॥८२॥

द्विजातिकुलसम्भूताः कन्याः काम्यास्तु योगिनः ।
यथा चित्तं न प्रदुष्येत् तथा कार्यं सुशोभनम् ॥८३॥

[2]मक्षिकैश्छर्दिसंमिश्रैः पुरीषादिविमिश्रितैः ।
पूजयेद् वज्रसत्त्वात्मा निर्विकल्पेन चेतसा ॥८४॥

यथाकामक्रियाकारी यथारुचितचेष्टितः ।
साधयेद् वज्रसत्त्वत्वमन्यथा क्लिश्यते ध्रुवम् ॥८५॥

व्रतोपवासनियमैर्देवतारूपभावनैः ।
[3]नानामुद्रासमायुक्तैः सिद्धचते नहि साधनम्[4] ॥८६॥

जम्बूद्वीप[5]रजःकल्पमन्त्रजापविभावनैः ।
सिद्धचते नहि बुद्धत्वं महावीर्यवतामपि ॥८७॥

एवमाद्यैरनेकैश्च शिशुभिः कल्पितैर्नयैः ।
दुर्लभं सुगतौ जन्म वज्रसत्त्वं(त्त्वः) कथं भवेत् ॥८८॥

महामण्डलमुद्रादीन् जगाद भगवान् मुनिः ।
सम्यग्ज्ञानसमायोग[6]भव्यताविगतात्मनाम् ॥८९॥

[7]स्वसंवेद्यस्वभावं यत् तत्त्वरत्नमनुत्तरम् ।
युक्त्यागमविचारैस्तु ग्रहीतुं ये तु न क्षमाः ॥९०॥

अज्ञानमोहसंच्छन्ना अपरीक्षकबुद्धयः ।
आदिकर्मिकग्राह्यास्ते हीनधर्मस्य भाजनाः ॥९१॥

तान् प्रत्युक्ता जगन्नाथैर्वज्रसत्त्वविभावनैः ।
भुजवर्णसमायुक्तमुद्रामण्डलकैस्तथा ॥९२॥

---

१. सेवयेत्–ग. । २. मक्षकैः–क. ग., मञ्चकैः च्छदि–मु. । ३. नानाभुज–क. ग. मु. । ४. साधनैः–मु. । ५. रजन्यानु–क. ग. । ६. योगं–ग. । ७. स्वयं–क. ।

अपरप्रत्यया[1] ये च गम्भीरज्ञानभाजनाः[2] ।
अकम्प्याः पापमित्रैश्च मारविघ्नविनायका:(कैः) ।।९३।।

तेषां तत्त्वमिदं शुद्धं सर्वकल्पविवर्जितम् ।
अगम्यं सर्वसत्त्वानां ब्रह्मादीनां च सर्वथा ।।९४।।

देशितं लोकनाथैस्तु ज्ञानमत्यद्भुतं परम् ।
सिद्धिदं जन्मनीहैव सर्वबुद्धमयं शिवम् ।।९५।।

इति ज्ञानसिद्धौ तत्त्वनिर्देशः प्रथमः परिच्छेदः ।।

१. अपरप्रत्युपायैर्ये-क. मु. । २. साधनाः-ग. ।

## द्वितीयः परिच्छेदः

पञ्चबुद्धस्वभावत्वात् पञ्चस्कन्धा जिनाः स्मृताः ।
धातवो लोचनाद्यास्तु बुद्धकायस्ततो मतः ।।१।।

एवं चेत् प्राणिनः सर्वे संबुद्धास्त्रिभवे सदा ।
बुद्धत्वाय क्रियाः सर्वा वृथैव श्रुतभावनाः ।।२।।

बुद्धत्वात् सर्वलोकस्य [1]सर्वोत्पत्तिभवे न तु ।
सुखदुःखपिपासादिबाधा तस्य न युज्यते ।।३।।

[2]षडभिज्ञादयश्चापि बोधौ[3] गुणविभूतयः ।
कथं ते न प्रवर्तन्ते बुद्धकायो भवेद् यदि ।।४।।

यस्त्वेवं न प्रजानाति स सम्बुद्धो भवेत् कथम् ।
एवं जानाति चेत् कश्चिदसौ बुद्धो भविष्यति ।।५।।

क्रमादभ्यासयोगेन यस्य चिन्ता प्रवर्तते ।
बुद्धो भवेदसौ योगी नान्ये बुद्धत्वसाधकाः ।।६।।

स्वभावाद् यदि ते बुद्धा नाभ्यासेन प्रयोजनम् ।
सयुक्तिकं[4] सदाभ्यासं [5]नाभ्यासं युक्तिवर्जितम् ।।७।।

यद्यनाथो जनः कश्चिद् राजाऽहमिति भावयेत् ।
कल्पकोटिशतेनापि नासौ राज्यमवाप्नुयात् ।।८।।

मिथ्याकल्पनया यस्माद् राज्यं तस्य न विद्यते ।
मिथ्याभावनया तस्माद् बुद्धत्वं न भविष्यति ।।९।।

१. सर्वेऽपि त्रिभवेन-क. मु. । २. षड्भिज्ञानादयं चापि-ग. । ३. बोध्या-ग. ।
४. क-क. मु. । ५. युक्तितोऽयु-क. ग. मु. ।

तन्त्रराजेषु संबुद्धैः[1] स्कन्धाद्यायतनादिषु ।
तत्त्वं नामभिरुद्दिष्टं संयुक्तं [2]सम[य]भाषया ॥१०॥

[3]शक्रद् वैरोचनं ख्यातं वज्रोदकं तथाऽपरम्[4] ।
स्त्रीन्द्रियं च यथा पद्मं वज्रं पुंसेन्द्रियं तथा ॥११॥

स्वभावाद् देवताकायं[5] तस्माद् वक्तुं न युज्यते ।
युक्त्यागमानुसारेण यस्माद् वक्तुं न शक्यते ॥१२॥

कृतकं[6] देवतारूपं[7] वज्रसत्त्वो भवेद् यदि ।
संस्कृतो जायते तस्माद् नश्यते तु घटादिवत् ॥१३॥

ततो निष्फलतां यायाद् बोधिचर्या त्वनेकधा ।
भावनाऽपि किमर्थं स्याद् यदि भूत्वा विनश्यति ॥१४॥

मनोमयकृतं रूपं कथं संस्कृतमुच्यते ।
कथं विनश्यति चैतत् शृणु मोहार्णवाधुना ॥१५॥

चित्तस्य कल्पना ह्येषा सापि संस्कृतलक्षणा ।
मनसा कल्पितं यत् तदविनाशि कथं भवेत् ॥१६॥

भुजवर्णसमायुक्तं यथापूर्वव्यवस्थितम् ।
अकृतं देवतारूपं भाव्यते तन्मयाऽधुना ॥१७॥

अकृतं देवतारूपं भाव्यते तत् त्वया यदि ।
स्थितं पूर्वमनुत्पन्नं भाव्यते किं प्रयोजनम् ॥१८॥

भवेयं तादृशं रूपं [8]मत्वाहमिति भावना ।
भावने द्वे विचार्येऽत्र योगिना रूपसाधने ॥१९॥

तादृशोऽहं भवेयमिति यदा ध्यानं प्रकल्प्यते ।
तदा ध्यानं स्फुटीभूतं दृश्यते देवता तु सा ॥२०॥

१. बद्धैः-मु. । २. समयाभा-ग. । ३. सक्रद्-क. ग., शुक्रं-मु., गृहीतपाठस्तु भो. । ४. नास्ति-क. ग. । ५. कायं-क. । ६. कें-क. ग. । ७. पे-क. ग. । ८. तत्वा-ग. ।



पटादौ रूपमालोक्य तथा[1] जा(ध्या)तस्य बुद्धयते[2] ।
[3]समाधिना भवेत् तत्तु नान्येनोत्पाद्यते ह्यसौ ॥२१॥

अजातं देवतारूपं ध्याने तत्र गतं यदि ।
सर्वाभिज्ञाप्रवृत्तेस्तु तद् रूपं चैत्र तत्क्षणात् ॥२२॥

एवं चेन्नास्ति ते सम्यक् तद् ध्यानेनागतं भवेत् ।
त्वया निष्पादितं रूपं कृतकं किं न बुध्यसे ॥२३॥

अहं तदिति पक्षे तु द्वयं तत्र न विद्यते ।
सिद्धस्य साधनं नास्ति कथं ध्यानप्रकल्पना ॥२४॥

सर्वज्ञत्वं हि सर्वज्ञो न भूयः प्राप्तुमिच्छति ।
बुद्धकृत्यं त्वया कार्यं बुद्धत्वं नान्यकारिता ॥२५॥

एवं ते नास्ति सम्यक्त्वं कथं मिथ्या प्रकल्प्यते ।
अकृतं बुद्धरूपं[4] यत् तदेवाहमिति[5] वृथा ॥२६॥

अकृतं देवतारूपं तदिदानीं विचार्यते ।
अकृतं शक्यते वक्तुं रूपित्वान्न घटादिवत् ॥२७॥

अत एव जगन्नाथा बालानां प्रतिबोधने ।
निर्वाणं दर्शयन्त्येव रूपस्यानित्यदर्शकाः ॥२८॥

तस्मात् त्वरूपवान् बुद्धः क्वचिल्लोके प्रवर्तते ।
बुद्धरूपप्रसिद्धयर्थं न कार्या रूपभावना ॥२९॥

न रूपिणो यथा बुद्धा युक्त्या यस्त्वजडात्मकः ।
प्रदेशस्थो भवेद् रूपी षडभिज्ञः कथं भवेत् ॥३०॥

लोकधातुषु कायाद्या रूपाद्यायतनादिषु ।
न तेषामगतिस्तत्र नेत्राद्यायतनादिषु ॥३१॥

१. अतः परम्-यदा ध्यानं [ प्रकल्प्यते तदा ]…जातस्य ते बुधाः-मु. । २. ते बुधः-क. ग. । ३. अयमंशो न क्वापि लभ्यते, गृहीतोंऽशो भोटानुसारी । ४. कृत्यं-मु. । ५. हम्मतिर्वृथा-क. मु. ।

गमनं चक्षुरादीनां यदा नैवोपलभ्यते ।
कथं तेषां समायोगो[1]ऽयोग[2]त्वाच्चेन्न[3] सर्ववित् ॥३२॥

गत्वा चेत् तत् प्रजानाति क्रमाज्ज्ञातुं कथं क्षमः ।
ज्ञेयस्यानन्तसद्भावात् सर्वज्ञो न तथापि सः ॥३३॥

बुद्धानां चक्षुरादिभिरतो नैव प्रयोजनम् ।
चक्षुरादिविनिर्मुक्तः कायोऽन्यो नोपलभ्यते ॥३४॥

प्रतिमेव तु निश्चेष्टो बुद्धकायो हि लभ्यते ।
यस्मात् संवेदनाभावाद् बुद्धरूपं न सर्ववित् ॥३५॥

दिव्यं चक्षुः कृपालूनां बुद्धानामस्ति संमतम् ।
दिव्यश्रोत्रादिसर्वाणि सर्वज्ञास्ते कथं नहि ॥३६॥

यदि ज्ञानेन जानीयाद् बुद्धकायेन किं तदा ।
कायस्थं वेत्ति तज्ज्ञानमतः कायो हि सर्ववित् ॥३७॥

कायाद् भिन्नमभिन्नं वा बुद्धज्ञानं भविष्यति ।
कायेन सह संयुक्तं निर्वाणे नश्यते हि[4] तत् ॥३८॥

कायस्य [5]नाशधर्मित्वाद् ज्ञानं चापि विनश्यति ।
अतो नैकत्रता युक्ता बुद्धानां ज्ञानकाययोः ॥३९॥

कायस्थं चेद् भवेज्ज्ञानं कायाभावे न सर्ववित् ।
प्रतीत्यसंभवं ज्ञानमतो नाशमवाप्नुयात् ॥४०॥

विनाशिज्ञानकायानां सर्वज्ञत्वं न युज्यते ।
अतोऽपि बुद्धकायो हि सर्वज्ञो न विधीयते ॥४१॥

ज्ञानादन्यत्वपक्षे तु बुद्धकायः कथं भवेत् ।
बुद्धस्य प्रतिमेत्येवं वक्तुं युक्तं हि योगिनाम्[6] ॥४२॥

१. योगा-क. । २. योगि-मु. । ३. त्वान्न च- मु. । ४. नु-क. । ५. नाम-क ग. । ६. योगिना-क. मु. ।



तस्मान्मूढतरो लोको[1] यो रूपं ध्यातुमिच्छति ।
बुद्धज्ञानप्रसिद्ध्यर्थमाकाशे[2] [3]भोक्तुमिच्छति ॥४३॥

सत्त्वेषु करुणाहीनाः [4]श्रद्धाप्रज्ञाविवर्जिताः ।
गम्भीरोदारधर्मेषु बुद्धिस्तेषां भवेन्नहि ॥४४॥

एतेषां [5]धर्मंहीनानामितश्चेतश्च धावताम् ।
उन्मत्तवत् प्रया(पा)तेषु पततां[6] धर्ममोहिनाम्[7] ॥४५॥

करुणा महती कार्या सत्त्वेभ्योऽपि विशिष्टता ।
नापमानमतो युक्तं सम्यग् ज्ञानोपदेशकैः ॥४६॥

**ज्ञानसिद्धौ रूपभावनानिषेधो द्वितीयः परिच्छेदः ॥**

१. लोके-ग. । २. काशं-भो. । ३. मोक्तु-क. । ४. प्रज्ञोपाय-भो. । ५. ज्ञान-क. । ६. युगपद्-क. मु. । ७. ताम्-मु. ।

## तृतीयः परिच्छेदः

रूपभावनया तावद् वज्रसत्त्वो न सिध्यति ।
साकारकल्पनाऽप्येवं वज्रसत्त्वं न साधयेत् ॥१॥

आकार एव तज्ज्ञानमाकाराद् वा तिरस्कृतम् ।
यद्याकारो भवेज्ज्ञानमेवं तावन्न युज्यते ॥२॥

आकारं चेन्न तज्ज्ञानं ज्ञानस्याकारता नहि ।
यथाकाशो घटो न स्यान्नैवाकाशो घटो भवेत् ॥३॥

अरूपं न भवेद् रूपं अरूपी रूपवान् नहि ।
अरूपि ज्ञानमाख्यातमाकारा रूपिणः स्मृताः ॥४॥

कथं तयोरेकता हि भवेदिति प्रकल्प्यते ।
आकारं ज्ञानमेवेति कल्पना नैव युज्यते ॥५॥

अन्यदोषप्रसङ्गाच्च शृणु संक्षेपतोऽधुना ।
यद्याकारो हि तज्ज्ञानं संस्कृतत्वं[1] प्रसज्यते ॥६॥

असंस्कृतो भवेद् भावो नहि लोके[2] स विद्यते ।
कृतकत्वाद् विनाशित्वं बुद्धज्ञाने कथं भवेत् ॥७॥

अनादिनिधनं शान्तमित्युवाच तथागतः ।
तत्सुताश्च महाभागा आहुर्ज्ञानमसंस्कृतम् ॥८॥

मायोपमं हि तत्सर्वं प्रतिभासं निरुच्यते ।
उत्पादविरती[3] न स्तः कथं ज्ञानं हि तद् भवेत् ॥९॥

१. तं त्वप्र–क. । २. बाले–भो. । ३. विरामौ–क. ग. ।



चक्षुर्विज्ञानमार्गं[1] यत् तज्ज्ञानेन विकल्प्यते[2] ।
विकारित्वं प्रसज्येत बुद्धज्ञानस्य नान्यथा ॥१०॥

अविकारं तु तज्ज्ञानं सर्वबुद्धैः प्रदर्शितम् ।
तस्मान्न युज्यते वक्तुमेकत्वमिति निश्चयः ॥११॥

ज्ञानस्य प्रतिभासोऽयं न तज्ज्ञानं प्रकल्प्यते ।
प्रतिभासनिरोधेन ज्ञानं कस्मान्निरुध्यते ॥१२॥

तस्मादसिद्धमेकत्वं त्वद्वाचैव सुनिश्चितम् ।
एकत्वं तु किमर्थं हि परिकल्पयसे तयोः[3] ॥१३॥

युक्त्यागम[4]विरुद्धत्वात् निष्फलत्वाच्च सर्वथा ।
तदेव[5] ज्ञानं साकारमित्येवं नहि युज्यते ॥१४॥

आकाराद् व्यतिरिक्तत्वे[6] ज्ञाने ज्ञानं न युज्यते ।
ज्ञेये सति भवेज्ज्ञानं न तु [7]ज्ञेयतिरस्कृते[8] ॥१५॥

आकारेभ्यः पृथग्भूतं ज्ञानं च[9] यदि कल्प्यते ।
आकाराश्च पृथग्भूता ज्ञानादेव निराश्रयात् ॥१६॥

ज्ञानस्योत्पादकाले तु नाकाराणां समुद्भवः ।
आकाराणां समुत्पादे ज्ञानं नैवोपपद्यते ॥१७॥

यथा घटस्य निष्पत्तौ न पटस्योद्भवो भवेत् ।
पृथक्त्वादेव धर्माणामेवं लोके प्रदृश्यते ॥१८॥

न ह्यजातेन पुत्रेण [10]पुत्रीभवितुमर्हति ।
एवं निराश्रये ज्ञाने साकारं कथमिष्यते ॥१९॥

१. नमागम्य–क. ग. । २. ल्पते–ग. । ३. तथा–क. । ४. निरु–क. । ५. ज्ञानं तदेव सा–मु. । ६. रिक्ते तु–मु. । ७. ज्ञेये–क. मु. । ८. तः–ग. । ९. चेद्–ग. मु. । १०. सपुत्रो–क. ग. ।

किमपेक्ष्य[1] भवेज्ज्ञानं साकारं येन तद्भवेत् ।
साकारज्ञानमित्येव आकाररहितं न तु ।।२०।।

आकाररहिते[2] ज्ञाने[3] साकारत्वं कथं भवेत् ।
आकारैः सहितं यत्तु तत् साकारं प्रकल्प(ल्प्य)ते ।।२१।।

सर्वाकारविनिर्मुक्तं बुद्धज्ञानं कथं भवेत् ।
आकारेण विनाऽपीह साकारत्वं भवेद् यदि ।
बुद्धज्ञानं विना बुद्धः कथं तत्त्वं भविष्यति ।।२२।।

न तज्ज्ञानं न सर्वज्ञः पृथग्ज्ञाने विकल्पते ।
अथ साकारताज्ञाने [4]सिद्धिर्नैवोपपद्यते ।।२३।।

आकारेण समायुक्तं साकारत्वं भवेद् यदि ।
न संयोगस्तयोर्दृष्टो[5] बुद्धवत् संप्रवर्तते[6] ।।२४।।

रूपिणो नहि संयोगा अरूपेणैव सर्वथा ।
यथाकाशेन संयोगान्न घटस्योद्भवो[7] भवेत् ।।२५।।

आकारेण च युक्तं हि साकारत्वं [8]भवेद् यदि ।
सापेक्षत्वाद् विनाशित्वं विसामग्र्यं[9] भविष्यति ।।२६।।
प्रतीत्यसम्भवं यत् तद् बुद्धज्ञानं भवेन्नहि ।
[10]संस्कृतत्वं यथा ज्ञाने साकारत्वं न सिद्ध्यति ।।२७।।

---

१. पेक्ष-ग. । २. रे रहितं-क. ग. । ३. ज्ञानं-ग. । ४. सिद्धि नै-क. मु. । ५. योगतया दृष्टं-क. मु. । ६. वर्तके-क. मु. । ७. घटस्योस्यते यतः-क. ग. । ८. न तद्भवेत्-क. ग. । ९. विषामग्र्यं-मु., मग्र्या-क. ग. । १०. सुकृत-क. ग. ।



आकारज्ञानयोश्चैव अन्यत्वं तु तयोर्यदि ।
अन्योन्यकं मयोक्तं च कथं ज्ञानं भविष्यति ।।२८।।

आकाराश्च पृथग्ज्ञानादित्येवं यदि कल्प(ल्प्य)ते ।
ज्ञानादन्यतया तेषामज्ञानत्वं प्रसज्यते ।।२९।।

आकारेभ्यो यथाऽन्यत्तु निराकारमतो भवेत् ।
तदा[1] ज्ञानं निराकारं कथमेवं न कल्प(ल्प्य)ते ।।३०।।

**ज्ञानसिद्धौ साकारनिराकरणस्तृतीयः परिच्छेदः ।।**

---

१. तथा-मु. ।

## चतुर्थः परिच्छेदः

प्रतिषिद्धं तु साकारं यथायुक्ति प्रकल्पितम् ।
निराकारं भवेन्नैव[1] यथा तदुच्यतेऽधुना ॥१॥

निराकारमपि ज्ञानं भवेद् यदि विकल्पितम् ।
आकारैर्विगतत्वात्तु किमसौ वेत्ति सर्ववित् ॥२॥

सर्वज्ञत्वं न तस्यास्ति न ज्ञानत्वाच्च[2] कल्पना ।
जडत्वं[3] च प्रसज्येत सर्वाकारमपश्यतः ॥३॥

अजडं बोधरूपं तु निराकारमिति स्मृतम् ।
वेत्ति सर्वं तु यत् सत्यमभूतं वेत्त्यसौ कथम् ॥४॥

सर्वकल्पविनिर्मुक्तान् सर्वधर्मान् निरात्मकान् ।
एवं जानाति तज्ज्ञानमलीकं वेत्त्यसौ कथम् ॥५॥

मायोपमादिदृष्टान्तैः सर्वधर्मान् प्रबुद्धच तैः[4] ।
देशितं सर्वबुद्धैश्च तत्र तत्र जगद्धितैः ॥६॥

मायाद्या ये तु दृष्टान्ता मिथ्याकल्पेन कल्पिताः ।
न विद्यन्ते स्वभावेन स(तत्) कथं वेत्ति सर्ववित् ॥७॥

शशशृङ्गं[5] न तद् वेत्ति नापि वन्ध्यासुतं[6] तथा ।
अभावत्वात् कथं वेत्ति निराकारमतो भवेत् ॥८॥

मायो(या)दयो हि दृष्टान्ता निर्दिष्टा ससुतैर्जिनैः ।
अभावं कल्पनामात्रं सर्वथा[7] न निरुद्धचति ॥९॥

१. न्नैवं-क. मु. । २. स-ग. । ३. जडामपि-ग. । ४. बुद्धचतः-क. । ५. शृङ्गान्-ग. ।
६. सुतान्-ग. । ७. नहि सिद्धचति-क. ग. मु. ।



दृष्टान्तैरेव ते तुल्या धर्माश्चेत् सर्वथा स्मृताः ।
भवेयुर्न च दृष्टान्ताः साध्यत्वात् सर्वयत्नतः ॥१०॥

पुरुषे सिंहदृष्टान्तो यथा लोके प्रवर्तते ।
शौर्यादिगुणसंयोगान्न तु पुच्छादिसम्भवैः ॥११॥

तस्मान्न सर्वथाऽभावाः सर्वभावाः स्वभावतः ।
युक्त्यागमानुसारेण बोद्धव्यं पुरुषोत्तमैः ॥१२॥

तस्मात् त्वया यदुद्दिष्टं बालोल्लापनगामिना[1] ।
न तद्भूतं वदन्त्येव जगदुद्धरणोद्यमाः ॥१३॥

शशशृङ्गं यथाऽभावं वन्ध्यायाः पुत्रवत् तथा ।
न क्वचित् सर्वभावानामभावो[2] देशितो[3] जिनैः[4] ॥१४॥

यदि रूपादयो भावा विद्यन्ते नैव सर्वथा ।
दिव्यचक्षुः कथं सिद्धं बुद्धानां करुणात्मनाम् ॥१५॥

दिव्यश्रोत्रादयः सर्वे न भवन्ति ततस्तथा ।
सर्वज्ञो हि ततो न स्यादभिज्ञानामभावतः ॥१६॥

निराकारेण ज्ञानेन बुद्धकाये सुसंयुते ।
सर्वाभिज्ञाः प्रवर्तन्ते सर्ववित्त्वं कथं नहि ॥१७॥

चक्षुरादिभिरेवैते रूपाद्यायतनादयः ।
अनुभाव्याः सचेतस्कैरेवं लोके प्रवर्तते ॥१८॥

रूपादयो न सन्तीति त्वयैवोक्तं पुनः पुनः ।
अभावेन कथं योगो भवेदिति प्रकल्प्यते ॥१९॥

यद्यभावेन योगः स्याद् युक्तं वक्तुं त्वयेदृशम् ।
अभावः सर्वथा येषां तद्योगः कथमिष्यते ॥२०॥

१. मिनाम्-ग. । २. भावाः-क. ग. । ३. शिताः-क. ग. । ४. जिनाः-क. ग. ।

अयोगेऽपि भवेज्ज्ञानं प्रणिधानवशात् तथा ।
करोति सर्वसत्त्वार्थं यथा वैनेयभाजने ॥२१॥

नासौ किञ्चिद् यदा वेत्ति सत्त्वार्थं कुरुते कथम् ।
नावेदको हि सर्वज्ञो न कृपा सत्त्वसंग्रहे(कटे) ॥२२॥

प्रणिधानेन सत्त्वार्थश्चिन्तामणिरिवापरः ।
करोतीति न तद्भु(द्यु)क्त्या प्रतिभाति सतामिह ॥२३॥

सर्वसत्त्वार्थसंसिद्धौ नियतत्वं सदा यतः ।
चिन्तामणिरतः ख्यातं ज्ञानं [1]तदजडात्मकम् ॥२४॥

अदृष्टेऽप्यकृते[2] तत्तु स्वकीया ज्ञानकल्पना ।
सर्वज्ञोऽहं जगत्स्वाम्यप्यभूवमिति किं नहि ॥२५॥

बोधिचित्तं समुत्पाद्य सर्वसंभारसंवृ(भृ)तः ।
महोत्साहो महावीर्यो भावनाचिन्तनादिभिः ॥२६॥

सद्धर्मश्रवणाद्यैस्तु दुःखेनैव प्रयोजनम् ।
अपूर्वस्योदयो[3] नास्ति स्थितपूर्वं च(न) नश्यति ॥२७॥

ईदृशं यदि बुद्धत्वं वृथा सर्वमतोऽखिलम् ।
भयेभ्यो मरणादिभ्यो मुक्तो नारकपीडनात् ॥२८॥

प्रियाप्रियादिदुःखैश्च [4]रहितस्त्वजडात्मकः ।
सर्वधर्मस्वभावज्ञः सर्वज्ञो हि निरुच्यते ॥२९॥

[5]स्वभावज्ञानसर्वज्ञ इति सम्बुद्धदेशितः ।
सर्वं प्रत्यक्षतो वेत्ति सर्वज्ञस्तेन कथ्यते ॥३०॥

[6]वरं तु नारकं दुःखं संसारेऽपि प्रवर्तकम् ।
चक्रवर्त्यादिसौख्यं च लभते नात्र संशयः ॥३१॥

**ज्ञानसिद्धौ निराकारनिराकरणश्चतुर्थः [7]परिच्छेदः ॥**

---

१. तु तज्जडा–मु. । २. तं यत्र–ग. मु. । ३. दयान्नास्ति–क. । ४. रहितो यज्जडा–ग. ।
५. स्वभावज्ञोन–ग. । ६. निहन्ति–ख. । ७. नास्ति–ग. ।



एवं दोष[1]समूहत्वाद् निराकारमतो न चेत् ।
ततो निश्चित्ततातत्त्वमधुना प्रविविच्यते[2] ॥१॥

किञ्चिन्मूढतरावस्थं ज्ञानमिच्छन्ति [3]मोहिनः ।
मूढभावनया मूढं प्राप्नुवन्त्येव दुर्णयाः ॥२॥

हेतुना सदृशं ज्ञानं फलं लोके तु युज्यते[4] ।
कोद्रवा नहि जायन्ते शालयः क्वचिदेव तु ॥३॥

निर्विकल्पमतो ज्ञानं नहि युक्तं विधीयते ।
ज्ञानस्य निर्विकल्पत्वमन्यथा नहि युज्यते ॥४॥

ज्ञानस्य निर्विकल्पत्वं सत्यमुक्तं तथागतैः ।
तत्त्वज्ञानस्य(नेन) मूढस्य निर्विकल्पत्वकल्पना ॥५॥

ज्ञानं बौद्धमनाभोगं निर्विकल्पमतः स्मृतम् ।
सञ्चिन्त्य[5] करुणाभावान्न तु निश्चित्तता भवेत् ॥६॥

निर्विकल्पत्वमज्ञानं क्वचिदेव न देशितम् ।
नहि धर्माः(र्मः) परा(रो) वाऽस्ति अन्यथा तत्त्वग्राहिणाम्[6] ॥७॥

सर्वज्ञः सर्वदर्शी च सर्वलोकार्थकारकः ।
तत्र तत्र जगन्नाथैर्देशितः करुणात्मभिः ॥८॥

निर्विकल्पनमात्रं[7] तु स्मरणं क्रियते यदि ।
पदान्येतानि सर्वाणि स्मर्यन्ते तु कथं नहि ॥९॥

उभयार्थविहीनत्वान्न ज्ञानं नापि सर्ववित् ।
प्रतिषिद्धमिदं तत्त्वं मिथ्याज्ञानं तु मोहिनाम् ॥१०॥

**ज्ञानसिद्धौ मूढभावनानिषेधः पञ्चमः[8] परिच्छेदः ॥**

---

१. समुद्र–क. ग., समूढ–मु., गृहीतपाठस्तु भोटसम्मतः । २. प्रतिषिध्यते क. ग. मु., गृहीतः पाठस्तु भोटसम्मतः । ३. योगिनः–भो. । ४. भुञ्जते–ग. भो. । ५. चित्तस्य भेदा–भो. । ६. ग्राहिणः–ग. । ७. त्वं–क. ग. । ८. नास्ति–ग. ।

## षष्ठः परिच्छेदः

नाश्वासं नापि प्रश्वासं तत्त्वं भवितुमर्हति ।
तयोर्मध्ये [1]भवन्नापि वायुस्तत्त्वं कथं भवेत् ॥१॥

मध्ये न किञ्चिदप्यस्ति कथं तत्त्वं भविष्यति ।
वायुर्यदि भवेत्तत्त्वं भस्त्रायां[2] च भविष्यति ॥२॥

प्रेरणे भस्त्रया वायोस्तथैव क्षेपणेऽपि च ।
यथा कश्चिद् धमेद् भस्त्रां तद्वद् देहं[3] धमेन्मनः ॥३॥

न वायुधमकः[4] कश्चिन्न वायुध्माम(प)कस्तथा ।
कायस्य धमकेनेव भस्त्राया धमकेन च ॥४॥

न विशेषस्तयोर्दृष्टो योगिभिस्तत्त्वदर्शिभिः ।
नरेण[5] मनसा तुल्यं धमकत्वक्रियां प्रति ॥५॥

भस्त्राया वायुना तुल्यं श्वासप्रश्वासवायुना ।
भस्त्रावातं यथा तत्त्वं देहवायुस्तथा भवेत् ॥६॥

देहवायुर्यदा तत्त्वं सर्वं द्वारविनिर्गतम् ।
न तत्त्वं युज्यते [6]वक्तुं विषयत्वात् प्रभञ्जनः ॥७॥

भ्रष्टमार्गातिमूढानां मिथ्यातत्त्वप्रभाविनाम् ।
न तेषां सुगतौ जन्म गतिरेकैव नारकी ॥८॥

**ज्ञानसिद्धौ आश्वास[7]प्रश्वासतत्त्वप्रतिषेधः षष्ठः ॥**

१. भवेन्नापि–ग. । २. पार्श्वे–क. मु. । ३. देहो–क. मु. । ४. घर्मकः–ग. ।
५. देहेन–भो. । ६. वक्तुमविषम–क. भो. । ७. 'प्रश्वासतत्त्व' नास्ति–क. मु. ।

## सप्तमः परिच्छेदः

सुखं द्वीन्द्रियजं केचित् तत्त्वमाहुर्नराधमाः ।
तच्चापि महासुखं नैव प्रवदन्ति जिनोत्तमाः ॥१॥

प्रतीत्योत्पादसंभूतं न तत्त्वं जायते क्वचित् ।
न तत्सुखं स्वभावेन विद्यते सर्वदा[1] यतः ॥२॥

सर्वताथागतं ज्ञानं स्वसंवेद्यस्वभावकम्[2] ।
सर्वसौख्याग्रभूतत्वात् महासुखमिति स्मृतम् ॥३॥

अनित्यं महासुखं नैव सदा नित्यं महासुखम् ।
कच्छकण्डूयनोत्पन्नं कथं महासुखं नहि (भवेत्) ॥४॥

रागतुल्यं सुखं नास्ति तज्जिनेभ्यः समाददन् ।
भुञ्जीत सर्वकामांश्च जुगुप्सां नैव कारयेत् ॥५॥

योगभद्रे(तन्त्रे)षु सर्वेषु वज्रसत्त्वेन देशितम् ।
योगिनां चित्तसौख्यार्थं न तत्त्वं परमार्थतः ॥६॥

**ज्ञानसिद्धौ महासुखप्रतिवर्णिकाप्रतिषेधः सप्तमः ॥**

१. दायकम्–ग. । २. जम्–ग. ।

## अष्टमः परिच्छेदः

सुखं वेद्यं प्रतिषिद्धं सम्यग्ज्ञानमतो नहि ।
मिथ्यातत्त्वानि सर्वाणि कल्पितानि सुमोहिनाम् ।।१।।

स्वबुद्धेर्न निषेध्यानि अन्यान्यपि विचक्षणैः ।
संम्यक् तत्त्वं यथा लभ्यं तदिदानीं प्रकथ्यते ।।२।।

परीतबुद्धयः सत्त्वा अल्पपुण्याल्पवीर्यकाः ।
कथं ते प्राप्नुयुर्ज्ञानं सर्वताथागतं परम् ।।३।।

तदनुक्रमं ब्रवीम्येष सर्वबुद्धैस्तु देशितम् ।
जानुनी संप्रतिष्ठाप्य धरण्यां सुप्रतिष्ठितः ।।४।।

वदेदेवं ततः श्राद्धो ऋजुकायः कृताञ्जलिः ।
संबुद्धाः शासिनो लोके भवि[1]ष्यन्त्यप्यनागताः ।।५।।

वर्तमाना गताश्चैव सद्धर्मप्रतिदेशकाः ।
सर्वबुद्धानहं वन्दे एतान् तत्त्वप्रदेशकान् ।।६।।

अहं निर्यातयाम्येष पूजोपस्थानकर्मणि[2] ।
आत्मानं सर्वबुद्धानां प्रतिगृह्णन्तु नायकाः ।।७।।

सर्वपूजाविशेषैस्तु पूजयंश्च[3] जगद्गुरून् ।
आकाशधातुपर्यन्तैरा[4] सुमेरुपरिग्रहैः ।।८।।

धर्मधातुसमुत्पन्नै[5]रचितैर्विविधैर्वरैः ।
अतीतानागतैः सर्वैर्वज्रसत्त्वविकुर्वितैः ।।९।।

समुत्पन्नानि पापानि सर्वाण्यपि स[6] तत्त्ववित् ।
प्रतिदेश्य समादधेत्[7] करणे संवरं पुनः ।।१०।।

१. ष्यन्तोऽप्य–मु. । २. णः–क. । ३. यन्–ग. । ४. र्न सु–क. ग. । ५. रचित्तै–ग. । ६. जगद्धितः–क. ग. भो. । ७. दध्यादकरसं–मु. ।



यत् पुण्यं सर्वबुद्धानां तत्सुतानां च धीमताम् ।
श्रावकसङ्घबुद्धानां यच्चान्यत् सर्वदेहिनाम् ।।११।।

अनुमोदे तथा पुण्यं सर्वजन्मसु यत्कृतम् ।
स्वकीयं परकीयं च संहृष्टेन तु चेतसा ।।१२।।

धर्मतत्त्वरथारूढा दशदिक् सर्वतः स्थिताः ।
धर्मद्योतनदक्षास्तु महाकारुण्यचेतसः ।
प्रकाशयन्तु ते धर्मं[1] विज्ञप्तिं[2] तत्करोम्यहम् ।।१३।।

कृताञ्जलिपुटो भूत्वाऽसौ[3] निर्वातुं गतो भवेत् ।
भवेयुः प्राणिनो बुद्धाः सर्वे यावत् प्रतिष्ठिताः ।।१४।।

तावत् तिष्ठन्तु ते नाथाः सर्वसत्त्वार्थकारकाः ।
कायवाङ्म(ा)नसं पुण्यं कृतं कारितमेव वा ।।१५।।

यच्चानुमोदितं[4] किञ्चित् तेन लोकोऽस्तु सर्ववित् ।
त्रिकालं तु यथाशक्त्या पुष्पादिभिः प्रपूज्य च ।।१६।।

मण्डलं सर्वबुद्धेभ्यो [5]वज्रसत्त्वेभ्य एव च ।
कृत्वा पञ्चामृतं मिश्रममिश्रं वा प्रकल्पितम् ।।१७।।

सर्वकल्पविमुक्तात्मा गृह्णीयात् समयादिकम् ।
तत्त्वसंग्रहतन्त्रादौ स्थितं समयसंवरम्[6] ।।१८।।

प्राणिनश्च न ते घात्या अदत्तं नैव चाहरेत् ।
नाचरेत् काममिथ्या[7] वा मृषां नैव हि भाषयेत् ।।१९।।

सर्वानर्थस्य मूलत्वाद् मद्यपानं विवर्जयेत् ।
पैशुन्यमथ पारुष्यं संभिन्नालापभाषणम् ।।२०।।

१. वर्मा–क. मु. । २. प्रक–ग. । ३. निर्वान्तु कदा कथम्–मु. ग. । ४. अनुमोदितं यत्कि–क. ग. । ५. बोधि–भो । ६. वरे–क. । ७. मिथ्यायां–क. ग. ।

अविद्यासत्त्वविद्वेषमिथ्यादृष्टिं [1]विहाय च ।
उत्पादयाम्य(मि)[2] पूर्वं तु स्थापयिष्यामि निर्वृतौ ॥२१॥

समाद्धचङ्गं ततः सर्वं गृह्णीयात् संवरं परम् ।
बोधिचित्तं तथोत्पाद्यं सर्वपुण्यमहोदयम् ॥२२॥

सर्वसत्त्वं[3] महान्तं च स्थाप्य सर्वज्ञभूमिषु ।
सर्वदुःखहरो ह्येषां भवेयं करुणात्मकः ॥२३॥

सर्वसम्पत्प्रदाता च बोधिमार्गोपदेशकः ।
सम्यक् चित्तं समुत्पाद्यं समत्वं सर्वदेहिषु ॥२४॥

बोधिचित्तमिदं ज्ञेयमन्यथा वितथं भवेत् ।
बोधिचित्तं न तन्नाम विषमत्वं यदा स्थितम् ॥२५॥

न तदुत्पद्यते ज्ञानमादिमध्यान्तवर्जितम् ।
नाधिष्ठानं प्रकुर्वन्ति सर्वदा सर्ववज्रिणः ॥२६॥

सर्वदेवादयश्चापि न तं रक्षन्ति विद्विषः ।
तस्मादुपायविद् योगी सर्वसत्त्वैकबान्धवः ॥२७॥

अविसंवादकं चित्तं समुत्पाद्यमतो[4] दृढम् ।
कृतेनानेन संबुद्धास्तुष्टाः सर्वंकृतात्मकाः ॥२८॥

अधिष्ठानं प्रकुर्वन्ति महाबलपराक्रमाः ।
मारविघ्नापदश्चापि नावतारगवेषकाः ॥२९॥

वज्रपाण्यादयो हृष्टा रक्षां कुर्वन्ति नित्यशः ।
सर्वपापविशुद्धिं च लभतेऽसौ नरोत्तमः ॥३०॥

सर्वपुण्योदयश्चापि सम्यग् ज्ञानोदयं(यो) भवेत् ।
अन्यथा नहि तत्त्वानामुदयं(यः) सर्वथा भवेत् ॥३१॥

१. च सर्वथा–क. ग. मु. । २. म्यपूर्वं–क. ग. मु. । ३. सत्त्वमयां, ह्येते–ग. स्वान् मया ह्येतान्–भो. । ४. ततो–मु. ।



तस्मादादौ विधानज्ञो यो[1] ज्ञानं प्राप्तुमिच्छति ।
जन्मनीहैव सिद्धचर्थं निरुपद्रवतां प्रति ॥३२॥

सर्वविघ्नविनाशार्थमायुरारोग्यवर्धनम् ।
करणीयमतोऽवश्यं योगिना फलकाङ्क्षिणा ॥३३॥

नानातन्त्रेषु निर्दिष्टं कृपया बुद्धवज्रिणा ।
एष मार्गस्थितो योगी शुक्लपक्षे यथा शशी ।
वृद्धिक्रमं समायाति क्षयं न तु कदाचन ॥३४॥

हीनवीर्यो यदा कश्चिद् बुद्धत्वं प्राप्नुयान्नहि ।
चक्रवर्तिसुखं राज्यं सर्वजन्मसु कारयेत् ॥३५॥

यत्पुण्यं सर्वबुद्धानां सर्वदिक्कालभाविनाम् ।
तत्तस्य रोमकूपाग्रे प्रवदन्ति जिनोत्तमाः ॥३६॥

**ज्ञानसिद्धौ पुण्यज्ञानसम्भारप्राप्त्युपायोऽष्टमः ॥**

१. यज्ज्ञानं–क. ।

## नवमः परिच्छेदः

कथं देशनया पापं क्षयं गच्छेत् सुदारुणम् ।
अनुमोदनया पुण्यं कथं [1]संभुज्यते तथा ॥१॥
[2]प्राणातिपातकादीनि कर्तव्यं क्वचिदब्रवीत् ।
क्वचिन्नेति च तन्त्रेषु कथं तन्न विरुध्यते ॥२॥
पञ्चामृतादिकं सर्वमभक्ष्यं गम्यते[3] तथा ।
अप्रियादीन्यनेकानि कथं तैस्तु शुभोदयः ॥३॥
यथाक्रमं ब्रवीम्येषां तन्त्रे तन्त्रे निदर्शितम् ।
मन्दधीजनबोधार्थं सर्वबुद्धैः [4]सुवेदिभिः ॥४॥
यत्कर्म क्रियते किञ्चित् कायवाङ्मनसः[5] क्रिया ।
चतुर्थो विद्यते नान्यस्तेषामेवं विचार्यते ॥५॥
चित्तेन न विना कायः किञ्चित् कर्तुं भवेत् क्षमः ।
वचनं च विना तेन भवेन्नैव कदाचन ॥६॥
काये वाक्कर्मणी तस्माद् भवेतां[6] मानसेऽद्वयम् ।
चित्तेनैव जगत् सर्वं क्रियते यत् शुभाशुभम् ॥७॥
हितार्थं यद् भवेत् कर्म सर्वं सच्चरितं भवेत् ।
विपर्ययादपुण्यं तत् प्रवदन्ति जिनोत्तमाः ॥८॥
चित्तेनैव तु तत्सर्वं क्रियते यत् शुभाशुभम् ।
चित्तेनैव भवेन्नाश इत्युवाच जगद्गुरुः ॥९॥
सत्त्वापकारनिष्पन्नं यत्पापं परिकीर्तितम् ।
हितचित्तं समुत्पाद्य [7]संभ्रष्टः प्रतिदेशयेत् ॥१०॥

---

१. संपूज्य–ग. । २. प्राणान्तपा–मु. । ३. गम्यकं–ग. । ४. सर्वादिभिः–क. । ५. सैः–क. मु. । ६. भवतां–क. मु. । ७. सभीतः–भो. ।



उत्साहेन कृतं पूर्वमपकारसमन्वितम् ।
प्रतिपक्षाद् भवेन्नाशो यस्मात् तेनैव तत्कृतम् ॥११॥
घटमुत्पाद्य यः कश्चिद् भिनत्त्येव तु तत्स्वयम् ।
तथा पापं समुत्पन्नं नाशयेदात्मना स तु ॥१२॥
देशयिष्याम्यहं पश्चादिति मूढः करोति चेत् ।
न चास्य देशना युक्ता न पापं तस्य नश्यति ॥१३॥
तथा पुण्यविनाशश्च तद्वदेव भवत्यपि ।
कृते पुण्येऽपि छिद्रत्वाद् भवेन्नाशो न संशयः ॥१४॥
ददतश्च[1] यदा चित्ते दातुमिच्छा न वर्तते ।
दत्तेऽपि च न तत्पुण्यं प्रभविष्यति कस्यचित् ॥१५॥
सर्वेषामधिकं स्थानं यत्र सर्वं विनश्यति ।
कल्पकोटिसहस्रैश्च समुपात्तं शुभं महत् ॥१६॥
उत्पन्नबोधिचित्तस्य पुण्यसम्भारसंचयः ।
कल्पकोटिशतोपात्तः क्षणादेव विनश्यति ॥१७॥
[2]तादृशेऽप्रतिघे नान्यद् द्वितीयमनुजेऽप्रिये ।
ततोऽपि रक्ष्यमत्यर्थमेवमुक्तं तथागतैः[3] ॥१८॥
तस्मिन् स्वल्पोपकारेण पुण्यराशिर्महान् भवेत् ।
सर्वेषां सर्वसौख्यानामाकरत्वाद् गुणोदधौ ॥१९॥
केचिन्मूढतरा बाला युक्त्यागममपश्यकाः ।
[4]कल्पनैव भवेत् पापमित्याहुः[5] स्वात्मनाशकाः ॥२०॥
कल्पनारहितो योगी यदि पापैर्न लिप्यते ।
द्वेषाद्युत्पादहेतौ तु विकारित्वं न युज्यते ॥२१॥

---

१. ददन्न च–क., ददते च–ग. । २. पङ्क्तिरेषा नास्ति–भो. । ३. इतः परम्–'तस्मिन् स्वल्पापकारेण पापराशिर्महान् भवेत्' इत्यधिकः पाठः–भो. । ४. कल्पे–ग. मु. । ५. दुरात्म–क. ग. ।

विहाय लौकिकीं वृत्तिमन्यथा तु भवेन्न किम् ।
शिरसा गमनं युक्तं तथा पाषाणभक्षणम् ॥२२॥

शीतवातपिपासादिबाधा तस्य न युज्यते ।
आक्रोशाद्यपकारैश्च न खेदमुपसंहरेत् ॥२३॥

स्वकीयं यदि कर्तव्यं लोभाद्याक्रुष्टदुःस्त्यजम्[1] ।
निर्विकल्पं प्रकल्प्येत न तथान्यत्र तद् भवेत् ॥२४॥

अनुत्पादक्षयं नैव पापानां कर्मणामिह ।
क्रोधाहङ्कारयोगाच्च न पापं परिशुद्धचते ॥२५॥

देवतैवेति[2] चेत् सर्वं करोतीति प्रकल्प्यते ।
उत्पादात् पूर्वमेवासौ कारयेन्न कथं भृशम् ॥२६॥

देवतैव करोतीति मिथ्येयं परिकल्पना ।
यस्माल्लोभाभिभूतानां क्रियेयं कर्तुमिच्छताम् ॥२७॥

अनुमोदादिसर्वाणि चिन्तायत्नानि सर्वतः ।
पुण्यसंभारयुक्तानि ज्ञातव्यानीह धीधनैः ॥२८॥

कायवाक्सहितं हीनं तत्पुण्यं न [3]समश्नुते ।
[4]एकान्ततीव्रचित्तस्य यत्पुण्यं बुद्धवर्णितम् ॥२९॥

प्राणिहिंसादि यत् कर्म लोभाद्याविष्टचेतसः ।
कुशलं न भवेत् सर्वं पुण्यं तु करुणोत्थितम् ॥३०॥

परहिताय यत् कर्म क्रियते तु कृपात्मकैः ।
तत् सर्वं पुण्यमित्याहुर्जगदाशाप्रपूरकाः[5] ॥३१॥

---

१. जेत्–क. ग. । २. देवतैव चेत्तत्–क., देवतैव च तत्–मु. । ३. सममस्तु ते–क. मु. ।
४. एकस्य–ग. । ५. कैः–मु. ।



निषेध्यमप्यनुज्ञातं कृपया दृढचेतसाम् ।
न तु स्वार्थाभिभूतानां करुणाहीनदेहिनाम् ॥३२॥

कृते पुण्येऽप्यनर्थाय कस्यचिद् द्विष्यतो जनम् ।
पापमेव भवेत् तस्य प्रवदन्ति जिनोत्तमाः ॥३३॥

उक्तं च—

कल्पान्ताद् बोधिसत्त्वानां शुभं वा यदि वाऽशुभम् ।
सर्वं कल्याणतामेति तेषां वश्यं यतो मनः ॥

इति ज्ञानसिद्धौ पापपुण्योत्पादविनाशपरिज्ञाननिर्देशो नवमः ॥

## दशमः परिच्छेदः

पञ्चामृतमविघ्नार्थं[1] चित्तसंसाधनापरैः ।
[2]अजादिमांसमप्येवं योगिनां विहितं जिनैः ॥१॥

सर्वेऽपि प्राणिनः सर्वं[3] भक्षन्तोऽपि न बुद्धकाः ।
न प्रजानन्ति ते मूढाः सत्त्वा[4] विगतबुद्धयः ॥२॥

सर्वसम्पूर्णभूतत्वात् कायस्तावत् शुचिर्नहि ।
तत्स्रावभक्षकः कश्चित् सर्वं भुक्तं न तेन किम् ॥३॥

क्षीरादिकं तथा सर्वं सर्वेषामेव देहिनाम् ।
भक्ष्याभक्ष्यप्रसिद्धानां शुचित्वं[5] नैव सिद्धयति ॥४॥

[6]भक्ष्यवस्तूनि सर्वाणि अशुचीनि प्रबुद्धयते ।
यस्माज्जलेन संभूतिस्तेषामिह प्रदृश्यते ॥५॥

वृष्टि[7]र्जलसमूहेन सर्वं प्रक्षाल्य कुत्सितम् ।
सर्वसस्यानि निष्पाद्य समुद्रादीन् विशेत् ततः ॥६॥

तज्जैरशुचिभिर्युक्तै[8]र्नागै[9]रुत्थापितं जलम् ।
पुनर्वृष्टेस्तथा सर्वसस्यं सम्पादयेज्जलम् ॥७॥

पुष्करिण्यादिके तद्वत् सर्वेषां सर्वक्षालनम् ।
शुच्यशुच्यादिकं तस्मात् सर्वं नैवात्र विद्यते ॥८॥

शुचित्वमस्ति चेत् किञ्चिदशुचित्वं भविष्यति ।
शुच्यभावादशुचित्वं सर्वथा नोपलभ्यते ॥९॥

आपेक्षिकत्वमन्योन्यं[10] परापा[11]रकवद्यथा ।
लौकिकी कल्पनैवैषा शुच्यशुच्यादिकल्पना ॥१०॥

ज्ञानसिद्धौ शुच्यशुच्य(चि)कल्पनाविविक्तो नाम दशमः ॥

१. मविज्ञाय-भो.। २. राजा-ग., गजा-भो.। ३. हत्वा-भो । ४. श्चिन्ता-क. ग. मु.। ५. स्वचित्ते-भो । ६. भक्त-क. ग. मु.। ७. वृष्टे-ख. ग.। ८. युक्तं-क. ग.। ९. नाशै-क.। १०. न्यपा-क. मु.। ११. वा-ग.।

## एकादशः परिच्छेदः

अगम्यागमनस्यापि विचारः क्रियतेऽधुना ।
योगिनां समनुज्ञातमविरुद्धं यथा तु तत् ॥१॥

सर्वेषां देहिनामेव [1]अस्त्येवोत्पादनाशनम् ।
तच्च कर्मवशादेव सर्वदा त्रिभवे भवेत् ॥२॥

माता पिता च पुत्रः स्यात् पुत्रो माता पिता भवेत् ।
चेटी भार्यापि तौ स्यातां भार्या माता भवत्यपि ॥३॥

एवमादीनि रूपाणि अनेकानि सुविस्तरैः ।
[2]भवेऽनादौ भवन्तीति वज्रसत्त्वेन देशितम् ॥४॥

एवं स्थिते तु संसारे दीर्घकालप्रवर्तिते ।
माता पिता न भूतो हि कश्चित् सत्त्वो न विद्यते ॥५॥

दुहित्राद्यास्तथा सर्वाः प्राग्भूताः सन्ति षड्गतौ ।
तस्माच्च महती कार्या कृपेत्युक्तं[3] जिनोत्तमैः ॥६॥

अत एव तु ते नाथा वज्रसत्त्वादयो वराः ।
दुहित्रादिरनुज्ञातं(ता) योगिनां चित्तशोधने[4] ॥७॥

कल्पनाजलपूर्णस्य संसारस्य महोदधेः ।
वज्रयानं समारुह्य को वा पारं गमिष्यति ॥८॥

मिथ्याज्ञानानि सर्वाणि युक्त्यागमसमायुतैः ।
निषिद्धानि क्रमात् तानि सर्वदोषाकराणि हि ॥९॥

ज्ञानसिद्धौ गम्यागम्यरहितो नाम एकादशः ॥

१. अन्त्यभावात्पाद-ख.। २. भवे त्वना-ग. । ३. त्युक्ता-क. ख. मु.। ४. साधने-क. ख. मु.।

## द्वादशः परिच्छेदः

वज्रज्ञानप्रबोधार्थं युक्तिरप्युच्यतेऽधुना ।
योगतन्त्रोक्तदृष्टान्तैर्हितायोत्तमयोगिनाम् ॥१॥

रूपकायादयो भावास्तत्स्वरूपं यथा न ते ।
तद्वारणं कृतं पूर्वमरूपत्वं ततः स्थितम् ॥२॥

सर्वदोषप्रसङ्गत्वाद्[1] भावस्तत्त्वं भवेन्नहि ।
अभावोऽपि न तत् तत्त्वं सर्वदुःखाकरं परम् ॥३॥

भावाभावौ न तौ तत्त्वं भवेत्ताभ्यां विवर्जितम् ।
न देशस्थमतो युक्तं सर्वज्ञो न भवेद् यदा ॥४॥

व्यापित्वं वज्रकायत्वमविकारित्वमेव च ।
सर्वज्ञत्वमतः सिद्धं सम्यग्ज्ञानस्य युक्तितः ॥५॥

रूपिणो नहि व्यापित्वं वज्रकायमतो नहि ।
अविकार्यं न तस्यास्ति न सर्वज्ञो भविष्यति ॥६॥

क्रमाज्जानाति यः कश्चित् सर्वं नासौ प्रबुद्ध्यते ।
ज्ञेयानामप्रमाणत्वान्नासौ सर्वज्ञ इष्यते ॥७॥

कल्पकोटिसहस्रेण नासौ ज्ञातुं भवेत् क्षमः ।
एकस्मिन्नेव दिग्भागे यद् ज्ञेयं परिकीर्तितम् ॥८॥

उत्पद्य[2] चेद् भवेन्नाशस्तस्मादुत्पाद्यते नहि ।
सुस्थितं चैव ज्ञानं तद् भ्रममात्रविनाशनम् ॥९॥

गतागतं भवेद् यस्य सुस्थितत्वं न विद्यते ।
चलत्वादेकदेशस्थान्नाशस्तस्य प्रयुज्यते ॥१०॥

१. ङ्गित्वाद्-क. मु. । २. उत्पाद्यं-ग. ।



[1]अवर्ण्यो यो भवेद्धर्मः कस्तं नाशयितुं क्षमः ।
शस्त्रोदकविषाग्नीनां बाध्योद्भूता[2] भवेन्न तु ॥११॥

सर्वाकारप्रतिष्ठात्मा निश्चलो गगनोपमः ।
असंक्लिष्टोऽविकारश्च सर्वथा [3]सार्वकालिकः ॥१२॥

असार्वकालिको यस्तु न सर्वज्ञो भवेत् स तु ।
तस्मात् [4]सर्वेषु कालेषु [5]अविकार्यमिति स्मृतम् ॥१३॥

स्थितमेवं महाज्ञानं सर्वेषामेव देहिनाम् ।
न प्रजानन्ति मूढास्ते बाला मोहपटावृताः ॥१४॥

लोष्टश्च धावति क्षिप्ते[6] नासौ प्रक्षेपक[7]स्तथा ।
एवं चित्तेन यद्भाव्यं[8] तद्भवति[9] न चित्तकम्[10] ॥१५॥

चित्तेन [11]भाव्यते यत्तत् तदेव तु निरीक्ष्यते ।
इदं तत् कीदृशं चित्तमिति चिन्ता[12] न वर्तते ॥१६॥

ज्ञानसिद्धौ तत्त्वस्थापनं नाम द्वादशः ॥

१. अवर्णयो—ग. । २. बुद्धो जातो—क. ग. मु., गृहीतः पाठस्तु भोटसम्मतः । ३. सर्वं—क. मु. । ४. सर्वप्रकालं तु—क. ग. मु. । ५. भवितव्य-क. ग. मु. । ६. क्षिप्तो-क. ग. मु. । ७. पक्षे त—ग. । ८. द्वाव्यं—क. मु. । ९. भावयन्ति—ख., तद्भावति—क. मु. । १०. चिन्तनात्—ख., तदचित्तताम्—ग. । ११. भास्यते—क. मु. । १२. प्रव—ख. ग. ।

## त्रयोदशः परिच्छेदः

एष मूढतरो लोको मोक्षार्थमात्मनिश्चयम्[1] ।
प्रपातेऽपि क्षिपत्येव पर्जन्येन[2] प्रचोदितः ॥१॥

ईदृशी दृश्यते चेष्टा बहूनामपि देहिनाम् ।
सन्त्यज्य सुगतौ यानमन्यन्मार्गं[3] समाश्रिताः ॥२॥

[4]तद्विधो मनुजः कश्चिन्मार्गमन्यत्(न्यं) प्रदर्शयेत् ।
पृच्छकोऽपि न तं पृच्छेद् [5]येन तत्त्वं प्रबुद्धयते ॥३॥

यदि मोहवशान्मार्गं दर्शयेत्[6] तमपश्यकः[7] ।
न शिवं लभते[8] गन्तुस्तन्मार्गेणैव[9] यायिनः ॥४॥

स्वयमपश्यको मार्गं कथमन्यं नयेद् भृशम् ।
द्वावेव[10] यदि गच्छेतां तयोर्दुःखं न संशयः ॥५॥

अटव्यां संप्रविष्टस्य जात्यन्धस्य यथा क्रिया ।
द्वितीयं तादृशं कश्चित् कथं ग्रामं प्रवेशयेत् ॥६॥

एवं जात्यन्धभूतास्ते सम्यग्ज्ञानमपश्यकाः ।
अशक्तास्तत्पदं प्राप्तुं कथमन्यं तु प्रापयेत् ॥७॥

तस्मात् परीक्ष्य कर्तव्यं गुरूणां पर्युपासनम् ।
शिष्यैर्भक्तिसमायुक्तैः प्रवदन्ति जिनोत्तमाः ॥८॥

रत्नत्रयेषु बुद्धात्मा कृपावान् सर्वजन्तुषु ।
त्यागादिसंयतो धीरः सर्वपुण्यमहोदयः ॥९॥

---

१. ये-क. ख. मु., स्वयम्-भो. । २. परजनेन-भो. । ३. मार्गमाश्रयेत्-ख., मार्गं समाश्रयेत्-क. ग. मु. । ४. नह्यन्यो-ख. ग., अन्धको-भो. । ५. यद्यत्तत्त्वं-ख मु. । ६. दर्शयन्त-क. ख. मु. । ७. कम्-क. मु. । ८. म्यते-क. ख. मु. । ९. तत्त्यागेनैव-ग. । १०. द्वावं द्वौ-ख. ।



बोधिचित्तसमुत्पन्नः प्रसन्नो गुणवान् सुधीः ।
अक्रोधनो महोत्साही धर्मगम्भीरनिश्चयः ॥१०॥

सयुक्तिकं धर्मदानं निराभासं सदा मतम् ।
अल्पेच्छता सदा तस्य संभारद्वयसम्भृतः[1] ॥११॥

गुरुरेष समाख्यातः सर्वबुद्धैः सवत्रिभिः ।
स एव सर्वसत्त्वानां शासको लोकनायकः ॥१२॥

अन्ये ये[2] गुरवः ख्याता मिथ्याज्ञानाभिमानिनः ।
लोभाद्यर्थं प्रकुर्वन्ति धर्मस्य देशनां पराम् ॥१३॥

पापमित्राश्च ते बालाः सत्त्वनाशे प्रतिष्ठिताः ।
मारपाक्षिकगोत्रास्तेऽपरात्मानो विनाशकाः ॥१४॥

वर्जनीयाश्च ते सत्त्वा न तेषां पर्युपासनम् ।
न तेषां प्रतिघं कुर्यान्न ते(स) पूज्यतरो[3] भवेत् ॥१५॥

श्रावकैः सहः संवासो[4] यथा नेष्टं(ष्टो) तथागतैः ।
तथैवैवंविधैः सार्धं न संवासो विशिष्यते ॥१६॥

ज्ञानसिद्धौ गुरुलक्षणनिर्देशः त्रयोदशः ॥

---

१. तम्-ग. । २. च-क. ख. मु. । ३. तरा-क. ख. मु. । ४. सोपस्थानं च-ग. भो. ।

## चतुर्दशः परिच्छेदः

[1]पूर्वोक्तलक्षणैस्तस्मादाचार्यो हि विधीयते ।
शिष्यस्य लक्षणं चैव कथ्यते स यदा भवेत् ॥१॥

नौकारूढो यथा कश्चित् कर्णधारः सुशिक्षितः ।
पारं महोदधेर्याति नान्यथा पारगो भवेत् ॥२॥

तद्वद् गुरौ त्रिरत्ने च बोधिचित्ते च भक्तिमान् ।
करुणा च तथा लोके नौरियं संप्रकीर्तिता ॥३॥

गुरुः कर्णधरो विद्वान् नौका धर्मः प्रकाशितः ।
संसारपारगन्तॄणां वज्रसत्त्वेन देशितम् ॥४॥

कर्णधारं विना नौका पारं प्राप्तुं क्षमा नहि ।
गुणैः सर्वैः प्रपूर्णोऽपि नागुरुर्भवपारगः ॥५॥

तस्मादेवास्य चैवेदं कार्यं सर्वं दृढव्रतैः ।
सदा पूजारतो योगी बाह्यैराध्यात्मिकैस्तथा ॥६॥

वन्दनादिक्रियाः सर्वाः प्रकुर्यात् स(ा)र्वकालिकाः ।
श्रद्धाप्रज्ञासमायुक्तः कृपार्द्रः सर्वजन्तुषु ॥७॥

अक्रोधनोऽविसंवादो त्यागादिगुणभूषितः ।
[2]स्व(सु)वीर्यवान् महोत्साही गुरोराज्ञां सदाकरः ॥८॥

[3]आज्ञप्तश्च स्वयं बुद्ध्वा [4]परिचर्यादिकं चरेत्[5] ।
यथाशक्ति[6] यथालाभं भोज्यभक्ता[7]दिकं तथा ॥९॥

---

१. सर्वासु मातृकासु त्रयोदशपरिच्छेदस्यान्तिमोऽयं श्लोको भोटानुवादमनुसृत्यात्र स्थापितः ।
२. सुवीर्यश्च–क. ख. मु. । ३. अनाज्ञप्त इति शोभनः पाठः । ४. परिस्करा–ख. ग. ।
५. वदेत्–ख. ग. । ६. शक्यं–ख., शक्त्य–ग. । ७. भक्ष्या–ग. ।



तिरस्कारे कृतेऽप्येवं स्वयमेव न दुर्मनाः ।
शिष्यः सर्वगुणोपेतो युक्त्यागमपरीक्षकः ॥१०॥

अपरीक्षकजातीयः पृच्छेत् परहितं च यः ।
शिष्यो न भवितुं शक्यो[1] बुद्धैरेवं प्रदर्श्यते ॥११॥

मृत्पिण्डो हि यथा बालैः क्षिप्यते यत्र तत्र वै ।
तद्वत् परवशः कश्चित् सर्वमस्य न भाजनम् ॥१२॥

ज्ञानसिद्धौ शिष्यलक्षणपरिच्छेदश्चतुर्दशः॥

---

१. शक्तो–क. मु. ।

## पञ्चदशः परिच्छेदः

सम्यक् तत्त्वं यथाभूतं पूर्वमुक्तं सयुक्तिकम् ।
सर्वतन्त्रे स्थितं तत्त्वं तेभ्यः किञ्चिन्निगद्यते ॥१॥

चौर[1](चरु)शब्दो यथा लोके भक्ष्यार्थं प्रतिपादयेत् ।
केषाञ्चित् चौरमेवाहुस्तन्त्रेऽप्येवं पदास्तथा ॥२॥

तैरेवाक्षरनिर्दे[2]शैर्मृदुमध्याधिमात्रकैः ।
धर्म(र्म) श्रद्धो[3]च्यते बुद्धैः सत्त्वानुग्रहकारकैः ॥३॥

केवलं तत्त्वमेवाह[4] कश्चिद् [5]मध्येन्द्रियं तथा ।
कश्चिन्मृद्विन्द्रियमेकं[6] केवलं वक्ति नान्यथा ॥४॥

श्रीसमाजोत्तरे देशितम्—

अनादिनिधनं शान्तं भावाभावक्षयं विभुम् ।
शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम् ॥ ( इति )

अनादिनिधनमिति उत्पादविनाशाभावम् । अनेन व्यापित्वमविकारित्वं सार्वकालिकत्वं च कथितम्, देशस्थरूपि[7]विकारिकालान्तरिका(ता)नां विनाशित्वात् । अरूपित्वेऽपि देशस्थो यदि स्यात्, विनाश्येव भवति । यथा कस्तूरिकादीनां सुगन्धमरूप्यपि देशस्थत्वात् कस्तूरि[8]कादीनां तद्वासितद्रव्यस्य वाऽभावे विनाशि स्याद् विकारि च । शान्तमिति सर्वक्लेशानामागन्तुकत्वात् प्रकृतिशान्तम् । पूर्वोक्तगुणयुक्तत्वादेव भावाभावक्षयम् । विभुः[9] प्रभुः स्वामी, [10]सर्वलौकिकलोको-

१. चोर—क. मु. । २. दि—ग. । ३. बोच्य—ख. ग., तत्त्वमु—भो. । ४. हुः—क. ख. मु. । ५. पदद्वयं-क. ख. म. । ६ यः कर्म—क. ख. मु. । ७. प्य—ख. । ८. री—क. मु. । ९. भुं—क. ख. मु. । १०. सर्वेषां—क. ख. मु. ।



त्तरार्थसम्पादकत्वात् । शून्यताकरुणाभिन्नमिति । सर्वधर्मनिःस्वभावतया सर्वतथागतज्ञानपरिज्ञानं[1] शून्यता; तया करुणया वा अभिन्नमेकीभूतं[2] यत् चित्तम् । करुणा नाम सर्वसत्त्वान् अस्मिन्नेव ज्ञानराजे प्रतिष्ठापयिष्यामि, सर्वसुखोपधानैश्च परिवारयिष्यामीति सम्यगाशयः ।

एतदुक्तं भवति—सर्वधर्मस्वभावज्ञो योगी सर्वतथागतैः सह अन्योन्य[व्याप्य]व्यापकभावेन सदा स्थितो बुद्धकृत्यकरः । सर्वसत्त्वेषु महाकरुणाप्रमाणानुगतं बोधिचित्तं वज्र इत्यर्थः । अनेन भावनाप्येवं कर्तव्येति निर्दशितम् । बोधिचित्तमिति स्मृतमिति अशेषयोगतन्त्रेष्वेवं मभिप्रापयति[3] । आदिकर्मिकादीनां तु बोधिचित्तं सर्वसत्त्वाननुत्तरायां[4] सम्यक्सम्बोधौ प्रतिष्ठापयामीति चित्तमात्रम् । पुनस्तत्रैव देशितम्—

सम्राजं मीलनं प्रोक्तं सर्वबुद्धाभिधानकम् ॥

अरूपिणाम् अनादिनिधनत्वासम्भवाद् धर्मकाया एव बुद्धाः । तेषां मीलनं सर्वतथागतज्ञानवज्रधरत्वमेव निर्दिष्टम्, अन्यथा रूपकायेन यदि मीलनं स्यात्, परमाणुप्रमाणोऽपि[5] सर्वतथागतानां मीलने आकाशमपि प्रपूर्याधिकतरो भवेयुः( त् ) । सर्वशब्दस्य निरवशेष-[6]वाचित्वान्नाल्पानां[7] मीलनं युज्यते । पुनस्तत्रैव तथा उत्पन्नक्रमाणामक्षतं सम्यग् ज्ञानम् । एवं च तत्रैव प्रकाशितम्—

ध्यायन्ति येऽमुं सुविशुद्धमनादिभावमित्यादि ।

प्रथमपटलेऽपि—

अथायं सर्वाकाशधातुः सर्वतथागतवज्रमयसंस्थितोऽभूत् ।

१. 'परिज्ञानं' नास्ति—ख. ग. । २. भूते नयेत्—ख., भूतेन यत्—ग. । ३. पात्रयति—ख. । ४. सत्त्वानुत्त—ख. ग. । ५. माणादि—क. मु. । ६. शेषत्वात्—क. ख. मु. । ७. चित्ताना-मल्पानां—क. ख. मु. ।

पुनः—

अनुत्पन्नेषु धर्मेषु न भावो न च भावना ।
आकाशवदयोगेन इति भावः प्रगीयते ॥

पुनः—

प्रकृतिप्रभास्वरा धर्मा आदिशुद्धा नभःसमाः ।
बोधिनाऽभिसमयैरिदं[1] बोधिनयं दृढम् ॥

नवमपटले—

क्रमशोत्पत्तिकं चैव क्रमशोत्पन्नकं[2] तथा ।

तद्यथा—अपि नाम कुलपुत्रा[3] आकाशः सर्वत्रानुगतः । आकाशानुगतानि सर्वधर्माणि, तानि न कामधातुस्थितानि नारूपधातुस्थितानि न चतुर्महाभूतस्थितानि । एवमेव कुलपुत्राः सर्वधर्मा अनुगन्तव्याः । [4]इममर्थं च संविज्ञाय तथागताः सर्वसत्त्वानां चाश्रयं विज्ञापयन्तो[5] यत एवं धर्मं देशयन्ति । एवमेव कुलपुत्रा आकाशवदनिरुक्तास्ते तथागतसमया अनुगन्तव्याः । तद्यथा—अपि नाम कुलपुत्राः! काण्डं च मथनीयं च पुरुषहस्तव्यायामं च प्रतीत्य धूमः प्रादुर्भवति, अग्निमभिनिर्वर्तयति । स चाग्निर्न काण्डे स्थितो न मथनीयस्थितो न पुरुषहस्तव्यायामस्थितः । एवमेव कुलपुत्राः सर्वतथागतवज्रसमया अनुगन्तव्या गमनागमनाद्यैरिति ।

दशमे पटले—

कायवाक्चित्तवज्राणां कायवाक्चित्तभावनम् ।
निर्विकल्पनिरालम्बसमता न क्वचित् स्थितम् ॥

---

१. मयमिदं-क. ख. । २. कस्तथा-क. ग. मु. । ३. पुत्र-ग. । ४. इद-ख. ग. ।
५. यन्त एवं-क. ख. मु. ।



द्वादशे पटले—

खतुल्यसमयभूतेषु निर्विकल्पस्वभाविषु ।
स्वभावशुद्धधर्मेषु नाटकोऽयं प्रभाव्यते ॥

षोडशे पटले—

पातनं वज्रसूत्रस्य रजसोऽपि निपातनम् ।
न कार्यं मन्त्रतत्त्वेन कारयेद् [1]बोधिदुर्लभाः(भः) ॥

मण्डलसूत्रेण[2] रजःपातनादिकं च न कुर्यात् । मन्त्रतत्त्वेनेति । मनसस्त्राण[3]भूतत्वात् । मन्त्रज्ञानं सम्यग्ज्ञानं निर्दशितमित्यर्थः । यद्येवं मोहात् करोति चेत्, बोधिर्दुष्करो भवतीति । मण्डलेना(ण्डला)दिकर्मिकसत्त्वकृपाकरुणा(कृत्यकरणेन[4]) बुद्धत्वं वज्रधरत्वं च दुर्लभं भवतीत्यर्थः । तस्मात् सम्यग्ज्ञानाभियुक्तेन महायोगिना मण्डललिखनप्रवेशाभिषेकादिकं निषिद्धमिति ।

लोचना वज्रसत्त्वानां दीप्यमाना स्वभावतः ।
ज्ञानं ताथागतं शुद्धं तद्वैरोचनमुच्यते ॥५॥

सर्वानिष्ट[5]जनैर्ज्ञानं मिथ्यागुरुजनैरपि ।
अप्रकम्प्यस्वभावत्वाद् अक्षोभ्योऽसौ प्रकथ्यते ॥६॥

रत्नानि प्रभवन्त्येव बुद्धादीनि यतो ध्रुवम् ।
ज्ञानं [6]सत्त्वार्थसंयुक्तं[7] रत्नसम्भवमुच्यते ॥७॥

अप्रतिष्ठितनिर्वाणमलिप्तं भवनिर्वृतौ ।
असंख्यगुणसंयोगाद् अमिताभः स उच्यते ॥८॥

सर्वसत्त्वार्थकार्याणां प्रसाधकतमः स्वयम् ।
अवन्ध्यं तन्महाज्ञानममोघसिद्धिरुच्यते ॥९॥

---

१. नापि-क. मु. । २. सूत्रस्वरजः-क. मु. । ३. मनःसन्त्राण-क. मु. । ४. कोष्ठान्तर्गतः पाठः-भो. । ५. शिष्ट-क. ख. मु. । ६. सत्त्वोत्थ-ग. । ७. युक्तं तद्-क. ख. मु. ।

सूक्ष्ममौदारिकं रूपं त्रैकाल्यपरिभावितम् ।
दृश्यते सर्वक्षेत्रस्थं लोचना तेन कथ्यते ॥१०॥

सर्वंताथागतं ज्ञानमात्मीयं[1] मामकं[2] यतः ।
अन्योन्यव्यापकादेव मामकी तेन तत् स्मृतम् ॥११॥

सर्वदोषहरं ज्ञानं सर्वंताथागतं परम् ।
मण्डलवासिनी ख्याता सर्वसंशोधनोद्यतम्( ता ) ॥१२॥

महाकरुणया नित्यं जगदुद्धरणाशयम् ।
सत्त्वोत्तारणदक्षत्वात् ताराज्ञानं प्रकाशितम् ॥१३॥

धातुभूतान् पृथिव्यादीन् बुद्धज्ञानोपभोगिनाम् ।
लोचनाद्यास्तु कीर्त्यन्ते सर्वंकामोपभोगिनाम् ॥१४॥

मरणादि[3] भयान्मुक्तं सर्वंताथागतं परम् ।
[4]प्रदुष्टं दमनज्ञानं ततो यमान्तकः स्मृतः ॥१५॥

मिथ्याज्ञानं विचा(निवा)र्याशु मूढसत्त्वप्रकाशितम् ।
सम्यग्ज्ञानप्रतिष्ठा(कृष्टा)त्मयोगात् प्रज्ञान्तकः स्मृतः ॥१६॥

जगदाह्लादनं सर्वं नातिगृह्णन्[5] विचारयन् ।
भवेष्व[6] लिप्तसम्बोधि[7]स्तेन पद्मान्तकः स्मृतः ॥१७॥

विघ्नादिभिर्विमुक्तात्मा ज्ञानं सर्वार्थसाधकम् ।
सर्वबुद्धमयं सिद्धं तेन विघ्नान्तकः स्मृतः ॥१८॥

[8]ज्ञानं ज्ञेयैर्विना न स्यात् समापत्तिरतः स्मृता ।
त्रिभवाभिमुखं ज्ञानं रागादित्रयसाधनम् ॥१९॥

सर्वबुद्धमयं शुद्धं त्रिमुखं तत् प्रकीर्तितम् ।
सुविशुद्धस्य सद्भावात् शुक्लवर्णं प्रकाशितम् ॥२०॥

१. आत्मार्थे–ग. । २. मकी–ग. । ३. भयमु–ग. । ४. प्रकु–क. ख. मु. । ५. न गृह्णाति–भो. । ६. ष्ट–क. ख. मु. । ७. धि–क. ख. मु. । ८. ज्ञानज्ञेयं विना–क. ख. मु. ।



सर्वदा[1] नानु(नि) पीतत्वं रक्तं कारुण्यवत् सदा ।
रत्नत्रयो(या)पकारादिकर्तुर्दमनमुच्यते[2] ॥२१॥

ज्ञानं तत् कृष्णमित्याहुर्जगदर्थकरं परम् ।
नानोपायविचित्रत्वात् श्यामवर्णं प्रकाशितम् ॥२२॥

रूपाद्यायतनादीनि प्रभुज्यन्ते स्वयं यतः ।
षड्भुजं कथ्यते तेन ज्ञानं बौद्धं तथागतैः ॥२३॥

बोधिचित्तं भवेद् वज्रं प्रज्ञा घण्टावि(भि)धीयते ।
चक्रमज्ञान[3]च्छेदाच्च रत्नं तु दुर्लभादपि ॥२४॥

भवदोषैरलिप्तत्वाज्ज्ञानं तत् पद्ममुच्यते ।
खड्गः क्लेशारिसंच्छेदादुत्पलं प्लवनात् ततः ॥२५॥

संसारजलनिमग्नै[4]र्यस्माद् ज्ञानं न ज्ञायते ।
बुद्धानुगानां सत्त्वानां ताडनान्मुद्गरं स्मृतम् ॥२६॥

दण्डेन शासनाद् दण्डज्ञानं तत् सत्त्वशासकम् ।
अन्योन्यव्यापकाभेदाद् विश्ववज्रमिति स्मृतम् ॥२७॥

एवं मया श्रुतमेकस्मिन् समये भगवान् सर्वतथागतकायवाक्चित्त-हृदयवज्रयोषिद्भगेषु विजहार । एकस्मिन्नेव काले भगवानैश्वर्यादिगुणयुक्तत्वात् । हृदयं ज्ञानं तदेव वज्रयोषित्, अभेद्यप्रज्ञास्वभावत्वात्, तदेव भगम्, सर्वक्लेशभञ्जनात्, तेषु सर्वतथागतकायवाक्-चित्तहृदयवज्रयोषिद्भगेषु विजहार ।

एतदुक्तं भवति—सर्वतथागतज्ञानेषु अन्योन्यव्याप्यव्यापकभूतेषु योगिनो ज्ञानं तदन्तर्गतमेव सर्वत्रैव[5] स्थितमिति तत्त्वम्, युगपदेव

१. दानु–ख. ग. । २. मुद्यतः–भो. । ३. नमुच्छेदात्–ग. । ४. ग्नं य–ख. ग. । ५. थैव–क. ख. मु. ।

सर्वेषु[1] ज्ञानेषु स्थितमित्यर्थः। अनभिलाप्यानभिलाप्येत्यादि, अप्रमेय-बोधिसत्त्वमहासत्त्वैः सहेत्यर्थः। तेऽप्यनेनैव न्यायेन संस्थिता इत्यभिप्रायः।

उक्तं च तत्त्वसंग्रहे तन्त्रराजे—

"सर्वतथागतमहाबोधिदृढसत्त्व" इत्यारभ्य "अनादिनिधनः शान्तो भगवान् महाबोधिसत्त्ववज्रः समन्तभद्रो महाबोधिसत्त्वः सर्वतथागत-हृदयेषु विजहार।

अथ सर्वतथागताः प्राहुः—कथं त्वं कुलपुत्रानुत्तरां सम्यक्सम्बोधि-मभिसंभोक्ष्यसे[2] यस्त्वं सर्वतथागततत्त्वान्यभिज्ञाय(तुं) दुष्टत( दुष्क)-राण्युपहससीति।

सर्वार्थसिद्धिबोधिसत्त्व आह—भगवन्तः सर्वतथागताः! आज्ञापयथ कथं प्रतिपद्या[3]मीदृशं तत्त्वमिति।

तथागता आहुः—प्रतिपद्यस्व कुलपुत्र! स्वचित्तप्रत्यवेक्षणसमाधानेन प्रकृतिसिद्धेन रुचिजप्तेन मन्त्रेणेति ॐ [स्व]चित्तप्रतिवेधं करोमीति।

महाबोधिसत्त्व आह—अर्हन्तो[4] भगवन्तः सर्वतथागताः स्वहृदि चन्द्रमण्डलाकारं पश्यामि। [[5]सर्वतथागता आहुः—] प्रकृतिभास्वर-मिदं कुलपुत्र चित्तं चन्द्रमण्डलवत्। चन्द्रमण्डलं प्रकृतिप्रभास्वरं तद्वद् ज्ञानम्। यथा क्रमाच्चन्द्रमण्डलं सम्पूर्णं भवति, तद्वत् प्रकृतिप्रभास्वरं चित्तरत्नमपि परिपूर्णं भवति। यथा चन्द्रमण्डलमागन्तु-ककलाभिः सूर्यमण्डलरश्म्यपगमात् क्रमात् पूर्णं दृश्यते, तद्वत् प्रकृति-परिशुद्धं चित्तरत्नमपि सर्वक्लेशमलकलङ्कापगमक्रमात् परिपूर्णबुद्धगुणं दृश्यते" इति।

१. सर्वज्ञानेषु क्रमेण स्थितमित्यर्थः-क. मु.। २. भोत्स्यसे-क. ख. मु.। ३. द्यामिती-ख. ग.। ४. आज्ञातो-ख. ग. मु.। ५. [ ] अयमंशः केवलं भोटमातृकायां वर्तते।



अद्वयसमताविजयेऽपि—

ॐ सर्वतथागतज्ञानवज्रस्वभावात्मकोऽहम्।

पुनर्नवमपटले—

स्वच्छं हि सर्वसत्त्वानां चित्तं शान्तं प्रभास्वरम्।
अलिप्तं विविधैर्भावैश्चित्ताद्यत्तत्त्वभावना॥

बुद्धकायविधानज्ञ उपभुञ्जीत तत्त्वतः।
अन्यथा नैव सिद्धयन्ति सर्वमन्त्रादयः[1] शुभाः॥

पुनश्च त्रयोदशे पटले—

मण्डलं सर्वबुद्धानां तत्त्वज्ञानां[2] च मण्डलम्।
साधकानामिदं तत्त्वं चिन्तामणिरिवाद्भुतम्॥

गुह्येन्दुमणितिलकं(के) तन्त्रराजेऽपि कथितम्—

सर्वाङ्गभावनाऽतीतं कल्पनाकल्पवर्जितम्।
मात्राबिन्दुसमातीतमेतन्मण्डलमुत्तमम्॥

पुनस्तत्रैव—

स चैव सर्वभावेन सर्वदा समवस्थितः।
अनादिनिधनः सत्त्वो वज्रसत्त्वः परं सुखम्॥

पुनः—

बोधिचित्तादृते नान्यत् सौख्यमस्ति त्रिधातुके।
बोधिचित्तमयं सौख्यं सर्वसौख्यप्रसर्पणम्॥

महासमयतन्त्रेऽपि निर्दिष्टम्—

अहं च कामरूपाग्रः सर्वबुद्धैरधिष्ठितः।
मयाऽपि धर्मकायाग्रा सर्वबुद्धा ह्यधिष्ठिताः॥

१. मन्त्रोदयाः-क. मु.। २. नाञ्च-क. मु.।

पुनश्च—

सुगतो भगवान्नित्यो वज्रसत्त्वो महासुखः ।
अतः प्रसूतिर्यस्मात् [1]तस्मादिदं च [2] न लक्ष्यते ॥

पुनश्च—

महासत्त्वो महावज्रो [3] वज्रसत्त्व [4]स्तदुच्यते ।

[5]तस्य त(स)त्त्वम्—

अनादिनिधनः सत्त्वो वज्रसत्त्वो [6] महारतः ।
समन्तभद्रः सर्वात्मा बोधिबुद्धस्त्रिधातुकः [7] ॥

स्थावरः सर्व एवाग्रो महावज्रो महाबलः ।
जङ्गमश्चित्तसंस्कारात् सर्वकृत् सर्व एव हि ॥

उक्तं च मायाजालेऽपि—

ज्ञानैकचक्षुरमलो [8] ज्ञानमूर्तिस्तथागतः ।
निष्कलः [9] सर्वगो व्यापी सूक्ष्मो [10] बीजमनास्रवः ॥

बोधिचित्तोत्पादः [11] सप्तमपटले—

अनुत्पन्नेषु धर्मेषु अनक्षरमनालयम् ।
कल्पकल्पनया वर्ज्यं उत्पादोऽयं प्रगीयते ॥

पुनस्तत्रैव—

प्रकृतिप्रभास्वरा धर्मा आदिशुद्धा ह्यनाविलाः ।
न बोधिर्नापि बुद्धत्वं न सत्त्वो नापि जीविता ॥

---

१. तेषामिदं—ग., तस्मादिष्टं तत्त्वं न—भो. । २. न च—क. ख. मु. । ३. ज्रं—ग. । ४. त्वं—ग. । ५. अयमंशो नास्ति भोटपाठे । ६. सत्त्वे—ग. । ७. तुके—क. ख. मु. । ८. मरो—ख. । ९. निष्फलः—क. ख. मु. । १०. सूक्ष्मबीज—क. ख. मु. । ११. त्पादपटलः सप्तमः—ख. ।



श्रीवज्रमण्डलालङ्कारे निगदितम्—

सर्वत्र सर्वधातौ तु सर्वसत्त्वाश्च [1] सर्वतः ।
सर्वकायमयं व्याप्य चित्तधारेव संस्थिता ॥

अनाश्रवादि(प्य)चिन्ता च निर्मला निर्ममा स्वयम् ।
शून्या गगनसमा चैव भावाभावविवर्जिता ॥

अनादिनिधना शान्ता सर्वधर्मेश्वरी च सा ।
बिभ्रती सर्वरूपाणि सत्यद्वयसमाश्रिता ॥

परमा परमार्थेन धर्मकायेति सा स्मृता ।
सर्वेन्द्रियं च विज्ञानं चित्तं सर्वत्र सर्वतः ॥

मनो [2] ज्ञानमिति ख्याता प्रज्ञा बुद्धिर्मतिः स्मृतिः ।
विपश्यना च सर्वज्ञज्ञानस्य [3] व्यवदानतः ॥

शाश्वतोच्छेदनिर्मुक्ता [4]अन्तद्वयविवर्जिता ।
संवृत्या परमार्थेन द्विधा तस्याः प्रकल्पना ॥

यथेन्धनं समाश्रित्य तेजोबीजं तु संस्थितम् ।
तिलेषु वा यथा तैलं रस इक्षोः प्रकल्पितः ॥

पुष्पेषु वा यथा गन्धो दध्नि [वा] नवनीतकम् [5] ।
सर्वत्र सर्वसत्त्वेषु स्थावरे जङ्गमेषु च ।
रूपारूपगता चापि महामुद्रा प्रतिष्ठिता ॥

पुनः—

ज्ञानममरण(मं)लक्षण(यं)मघोष(क्षोभ्य)मनादिशुद्धं विमलं प्रभास्वरमनभिलाप्यमिति ।

---

१. सत्त्वं च—ग. । २. विज्ञान—ख. ग. । ३. 'ज्ञेया संक्लेश' इत्यधिकम्—ख. ग. भो. । ४. अचिन्तद्वयव—क. मु. । ५. नीतं यथा—क. ख. मु. ।

सम्बरतन्त्रे निगदितम्—

न योगः प्रतिबिम्बेषु निषिक्तादिषु जायते ।
बोधिचित्तमहायोगाद् योगिनस्तेन देवताः ॥

बोधिचित्तमिदं वज्रं सर्वबुद्धत्वमात्मनः ।
तस्मात् [1]सर्वात्मयोगेन सर्वबुद्धत्वमाप्नुते ॥

एनं[2] पश्यन्ति संयुक्तं [3]पूजयन्ति च सर्वथा ।
दृष्टास्तैः पूजिताश्चैव सर्वबुद्धा भवन्ति हि ॥

दर्शनस्पर्शनाभ्यां च सर्वबुद्धस्य वाऽस्य हि ।
अमण्डलप्रविष्टाश्च[4] [5]दृष्टसत्या[6] भवन्ति हि ॥

दर्शनस्पर्शनाभ्यां च श्रवणस्मरणेन च ।
सर्वपापैर्विमुच्यन्ते पूज्यन्ते सर्वसिद्धिभिः ॥

सर्वयोगसमायोगैः सर्वबुद्धस्य वाऽस्य हि ।
नार्योऽपि हि विमुच्यन्ते बुद्धबोधिं [7]स्पृशन्ति च ॥

सर्वत्र सर्वतः सर्वं सर्वथा सर्वदा स्वयम् ।
सर्वबुद्धमयं सिद्धं स्वमात्मानं प्रपश्यति ॥

सर्वात्मसंस्थिताश्चैनं पूजयन्ति तथागताः ।
सर्वपूजामहामेघव्यूहप्रसरसञ्चयैः ॥

सर्वभोगोपभोगैश्च सेव्यमानैर्यथासुखम् ।
स्वाधिदैवतयोगेन स्वमात्मानं प्रपूजयेत् ॥

पुनश्च—

विचित्रकर्मयोगेन विचित्रविनयात्मना ।
सत्त्वानां विनयार्थाय तदन्ये विधयः स्मृताः ॥

---

१. सार्वात्म्य—क. ख. मु. । २. येयेनं—ख. ग. । ३. सर्वथा पूजयन्ति ये—क. ख. मु. । ४. विष्टोऽपि—ग. । ५. दृष्ट्वा—ग. । ६. स्पृष्ट्वा—भो. । ७. स्मृ—क. मु. ।



पुनः—

अनादिनिधनः सत्त्वो वज्रसत्त्वः[1] परं यतः ।
सुभगेति[2] च विख्यातो सुस्थितो[3] बुद्धमुद्रया ॥

पुनश्च—

विचित्रकर्मयोगेन विचित्रविधिकाङ्क्षिणाम् ।
बुद्धवज्रधराद्यास्तु कृतका विनयाः स्मृताः ॥

ग्रन्थबाहुल्यभयात् परमाद्यगुह्यघनोच्चयादि[4] न लिखितम्[5] ।

इति ज्ञानसिद्धौ तन्त्रोक्ततत्त्वाक्षरपरनिदर्शनपरिच्छेदः पञ्चदशः ॥

---

१. त्वोऽपरं—ग. । २. सुभद्रेति—भो. । ३. म्लेच्छितैः-ख. ग., लाञ्छितो- भो. । ४. यादीनां-ख. ग. । ५. श्रीपरमाद्ये यद्गुह्यपद्मघनालोचनादि तद् ग्रन्थबाहुल्यभयान्न लिखितमिति—भो. ।

## षोडशः परिच्छेदः

एवं ज्ञानवरं सम्यगुपायेन समायुतम् ।
भावयित्वा सुतीर्थ्या(क्ष्णा)त्मा जन्मन्यत्रैव सिद्ध्यति ॥१॥

उपायः करुणामूलं बोधिचित्तं सुसंभृतम् ।
समता सर्वसत्त्वेषु त्रिरत्ने वरपूज्यता ॥२॥

[1]आसाक्षात्करणं शून्यं सर्वकामविरागिता ।
परिभोगोऽपि पूजार्थं सर्वताथागतं वहेत् ॥३॥

प्रणाममादितः कृत्वा यावती परिणामना ।
उपाय[2] एष संबुद्धैः करुणादिः प्रदेशितः ॥४॥

एवं सोपायविद् योगी सर्वबुद्ध इवापरः ।
न तस्योपद्रवं किञ्चित् सदा सर्वत्र विद्यते ॥५॥

मन्त्रमुद्रादियोगेन परीक्षा परिकीर्तिता ।
सर्वागमनिबन्धेषु सर्वबुद्धैश्च तत्सुतैः ॥६॥

तैरेव ससुतैर्बुद्धैः कल्पकोटिशतान्तरम् ।
रक्षा कृता तथा नैव यथैव ज्ञानभाविनः ॥७॥

चतुरीर्यापथैर्युक्ता भावना समुदाहृता ।
स्थानं च योगिना रोच्यं सर्वसौख्यप्रदायकम् ॥८॥

नोपवासरतो योगी न स्नानशुद्धिकल्पनः ।
नानाकल्पविविक्तात्मा भवेद् योगी वरात्मकः ॥९॥

१. असा–ग. । २. उपायौषध–ग. ।



कायिकं मानसं दुःखं नावकाशं प्रदापयेत् ।
सर्वसौख्यसमायुक्तः सिद्ध्यते नात्र संशयः ॥१०॥

[1]जायन्तः सर्वसत्त्वा वै न परोऽस्त्यत्र षड्गतौ ।
तस्मान्न कुत्रचिद् [2]ग्राह्यविशेषो [3]ह्युपलभ्यते ॥११॥

स्थाने देशे गृहे वाऽथ पुस्तके प्रतिमासु च ।
सर्वग्राह्यविनिर्मुक्तो योगी बुद्धैस्तु वर्णितः ॥१२॥

ज्ञानसिद्धौ उपायनिर्देशनपरिच्छेदः षोडशः ॥

१. ज्ञायतः–क. ख. मु. । २. ग्राह्यो वि–ग. । ३. नोप–भो. ।

## सप्तदशः परिच्छेदः

सम्यग्ज्ञानसमुत्पन्नो योगी प्रार्थयते यदा ।
अभिषेकः प्रदातव्यस्त्रैधातुकनमस्कृतः ॥१॥

सर्वोपकरणैर्युक्तः सर्वपूजासुसंवृतः ।
आराधयेद् वरं वज्रगुरुं सर्वगुणार्णवम् ॥२॥

भक्ष्यभोज्यादियुक्तेन पुष्पगन्धादिकेन च ।
सम्पूज्य मण्डलं कृत्वा कृताञ्जलिपुटो गदेत् ॥३॥

सम्यग् ज्ञानवरं प्राप्तं प्रसादात् करुणात्मक ।
स्वसंवेद्यस्वभावं च आदत्तमपि निश्चयम् ॥४॥

इदमेवाद्वयं ज्ञानं नान्यज्जगति विद्यते ।
पीतं धर्मामृतं प्राप्य प्रार्थयेत महागुरुम् ॥५॥

सर्वसत्त्वार्थकार्याणि यथाशक्त्या करोम्यहम् ।
धर्मदाने नयेत् कोऽपि हितं दास्याम्यहं यथा ॥६॥

अभिषेकवरं रत्नं प्रसादात् प्राप्यते यदि ।
ग्रहीतुमहमिच्छामि प्रसादं कुरुताभयम् ॥७॥

गुरुणापि हि दृष्टेन गुणपूर्णा जना यदि ।
एवमस्तु[1] प्रदास्यादि(मि) सर्वबुद्धानुवर्तितम् ॥८॥

वक्तव्यं कृपया युक्तं वचः सर्वार्थसम्पदम् ।
धर्मराज्याभिषेका[2]ग्रमभिषेकं निरुत्तरम् ॥९॥

ततो दिनावधिं कृत्वा शिष्याय वचनं वदेत् ।
अमुकस्मिन् दिने वत्स करिष्यामि प्रपूरणम् ॥१०॥

१. मस्व–क., एवं देयं प्रसादादि–मु. । २. काग्रैरभि–क. ग., काग्रेर–ख. ।



[1]मनसा भवतोऽवश्यं कुरु चित्तमतो दृढम् ।
दुष्पूरणं यथा[2] न स्यात्तथा कार्यं महामते ॥११॥

ततो दिनावधि प्राप्ते सर्वबुद्धान् प्रपूजयेत् ।
आर्यसङ्घाय भोज्यं च दद्याच्चैव सदक्षिणम् ॥१२॥

गणभोज्यमुदारं च गुरूणां च विशेषतः ।
यथाशक्त्या त्वनाथानां [3]सर्वं विधिं समाचरेत् ॥१३॥

ततो[4] गुरुदक्षिणां दद्यात् सर्वबुद्धानुवर्णिताम् ।
सर्वतो(दा) विश्वगुरवे सिद्धमुत्तर(म)दक्षिणम् ॥१४॥

यस्य यद् दुष्परित्याज्यं तदुत्तममिति स्मृतम् ।
यद्यदिष्टतरं किञ्चिद् विशिष्टतरमेव वा ।
तत्तद्धि गुरवे देयं तदेवाक्षयमिच्छता ॥१५॥

अथास्याभिमतं स्याद्वै [5]चित्तं कार्यमथापि वा ।
तद्देयमथवा कार्यं स्वल्पमप्युत्तमं हितम् ॥१६॥

अथोत्तमं भवेद्यस्य न[6] वै दद्यात्तु दक्षिणाम् ।
सर्वाचार्यापमानेन स नित्यं दुःखमाप्नुते ॥१७॥

सम्बरतन्त्रोक्ता दक्षिणेयम् ।

आत्मानमपि निर्यात्य पुनर्मूल्यैस्तु मोक्षयेत् ।
नानातन्त्रेषु निर्दिष्टा दक्षिणेयं निरुत्तरा ॥१८॥

ततोऽभिषेक(को)[7] बुद्धानाम् ।

सर्वबुद्धमयं योगं सर्वसम्पत्सुखोदयम् ।
अगम्यं सर्वसत्त्वानां लोकनाथेन भाषितम् ॥१९॥

१. मनसि निश्चितेऽ–भो. । २. यतो–क. मु. । ३. सर्ववि–क. ख. । ४. ततो गुरोर्दक्षिणाद्या सर्वबुद्धानुवर्णिता–क. ख. मु । ५. चित्रं–क. मु. । ६. नैव दद्यात्तद्–ख., दद्याच्चेत्तं न दक्षिणाम्–मु. । ७. 'अभिषे''''नाम्' नास्ति–क. मु. ।

सर्वताथागतं चित्तं सर्ववाक्कायसम्भवम् ।
द्वयोरप्येवमाज्ञाय अधिष्ठानं प्रयोजयेत् ॥२०॥
मानसं सर्वमेवेदं कायिकं वाक्समुद्भवम् ।
सर्वबुद्धमधिष्ठायानुज्ञां तस्य प्रदापयेत् ॥२१॥
अभिषिक्तोऽसि[1] संबुद्धैरतीतानागतैरपि ।
सर्ववज्रधरैश्चापि सर्ववज्रधराय च ॥२२॥
एककायोऽसि बुद्धानां त्वमिदानीमनाहतः ।
धर्माभिषेकदानेन कुरु सत्त्वेष्वनुग्रहम् ॥२३॥
रत्नत्रये यथाशक्त्या रक्षा कार्या शुभोदया ।
वज्रसत्त्वैरिदं[2] कार्यं सर्वबुद्धैर्निदर्शितम् ॥२४॥
[3]मय्यवमन्यना[4] कार्या न त्वया वरवज्रिणा ।
विषमा परिहारेण कालं कृत्वा सुदारुणम् ॥२५॥
घोरं नरकदुःखौघं मा भूत् कल्पशतान्तरम् ।
मिथ्याधर्मसमाचारा ये तु लोकविडम्बका ॥२६॥
न तेषु सम्भवं कुर्यात् सद्धर्मप्रतिपक्षकाः[5] ।
मूढा धर्मविहीनास्ते [6]स्वसुखोदयमानसाः ॥२७॥
पुण्यहीनाः परां बोधिं नैव प्राप्स्यन्ति दुर्णयाः ।
इतस्ततश्च संसारे ते भ्रमन्ति हि षड्गतौ ॥२८॥
लोकमोहनशीलाश्च सद्धर्मप्रतिपक्षकाः[7] ।
एवंविधा अनेके च [8]भ्रमधर्मसमाश्रयाः ॥२९॥
न तेषां सुगतौ जन्म बुद्धत्वमपि दुर्लभम् ।
एतेभ्यस्त्वं[9] सदा रक्ष्यो[10] भवितव्योऽसि महामते ॥३०॥

---

१. षिक्तमिमं बुद्धै-क. ख. मु. । २. रिह-क. । ३. मय्ये-ग. । ४. न्यता-क. ग. । ५. क्षेपका-ख । ६. त्वसु-ख. ग. । ७. रूपकाः-क., क्षेपकाः-ख. ग. । ८. धर्मभ्रम-मु. । ९. स्तु-क. ख. मु. । १०. रक्ष्या-ख., रक्षा-मु. ।



मारपाशनिबद्धास्ते[1] परात्मविधिनायकाः ।
कुरु सत्त्वार्थमधुना सर्वबुद्धाधिप स्वयम् ॥३१॥
यथाविनयतो धर्मं प्रकाशय [2]जनेऽखिले ।
संशयं नहि धर्मे तु कर्तव्यमधुना त्वया ॥३२॥
नाभिषेकं पुनर्ग्राह्यं त्वयेदानीं महामते ।
सम्यग् धर्मपरो विद्वान् त्रैधातुकनमस्कृतः ।
अभिषेकं त्वया प्राप्तं विद्यते नह्यतः परम् ॥३३॥

सर्वताथागतज्ञानवराभिषिक्तस्य योगिनो माहात्म्यं श्रीसमाजे निर्दिष्टम् । तद्यथा—सर्वतथागतकायवाक्चित्तवज्रगुह्यसमभिषिक्तो भगवान् आचार्यः[3] सर्वतथागतैः सर्वबोधिसत्त्वैश्च कथं द्रष्टव्यः ?

सर्वतथागताः[4] प्राहुः[5]—बोधिचित्तं वज्रमिव कुलपुत्राः सर्वतथागतैः सर्वबोधिसत्त्वैश्च द्रष्टव्यम्[6] । तत् कस्माद्धेतोः ? बोधिचित्तवज्रश्चाचार्योऽद्वयमेव तदधिकारं यावत् कुलपुत्राः ! संक्षेपतः कथयामि । यावन्तो दशदिग्लोकधातुषु बुद्धा बोधिसत्त्वाश्च तिष्ठन्ति प्रयान्ति च, सर्वे ते त्रिकालसमयमागत्य तमाचार्यं सर्वतथागतपूजाभिः संपूज्य सर्वबुद्धक्षेत्रे पुनरपि प्रकाशयन्ति । एवं च वाग्वज्राक्षरं निश्चारयन्ति । पिताऽस्माकं सर्वतथागतानां माताऽस्माकं सर्वतथागतानामिति । तद्यथा—अपि नाम कुलपुत्राः ! यावन्तो बुद्धा भगवन्तो दशसु दिक्षु प्रचरन्ति, तेषां च बुद्धानां भगवतां यावन्तः कायवाक्चित्तवज्रपुण्यस्कन्धा आचार्यस्य रोमकूपाग्रविवरे विशिष्यते(न्ते) । तत् कस्माद् हेतोः ? बोधिचित्तं कुलपुत्राः ! सर्वबुद्धज्ञानानां सारभूतमुत्पत्तिभूतं यावत् सर्वज्ञज्ञानाकरमिति ।

ज्ञानसिद्धौ वज्रज्ञानाभिषेकविधिः सप्तदशः ॥

---

१. द्धानां-क. । २. जिना-ख., जिने-ग. । ३. चार्याः-क. ख. मु. । ४. तः-ग. । ५. प्राहु-ग. । ६, द्रष्टव्यः-क.ग. ।

## अष्टादशः परिच्छेदः

महाज्ञानप्रभावितमहायोगीश्वरस्य प्रभावं कल्पकोटिशतेनापि [1]सर्वतथागतैरपि न शक्यं वर्णयितुम् । श्रीसंवरोक्तं किञ्चिन्मात्रं कथ्यते—

सर्वत्र सर्वतः सर्वं सर्वथा सर्वदा स्वयम् ।
[2]सर्वरत्नादिवल्लोके सर्वभावान्(भावो) भवत्यसौ ॥१॥

बुद्धक्षेत्रेषु सर्वेषु बुद्धनिर्वाणमावहन् ।
दर्शय[3] बुद्धकार्याणि बुद्धनिर्माणमायया ॥२॥

बुद्धवज्रधरादीनां विश्वरूपत्रिधात्मकैः ।
त्रैधातुकमहाराज सर्वकार्याणि दर्शय[3] ॥३॥

सन्धिविग्रहयुद्धं[4] हि राज्यं मायाविकुर्वितम् ।
त्रैधातुकमहाराज अवष्टम्भय[5] साहसैः ॥४॥

प्रमादोऽयं जगत् सर्वं [6]विश्वनर्तित दर्शय ।
[7]एवमाद्यैरनन्ताग्रैः धर्मधातुसमासमैः ॥५॥

१. 'सर्वतथागतैरपि' नास्ति-भो. । २. सर्वबुद्धादिभिर्लो-मु., रत्नादिवल्-ख. । ३. दर्शयेत्-ग. । ४. पूर्वारि-क. ख. ग. मु. । ५. ष्टम्य च-मु. । ६. दर्शयेद्विश्वनर्तितैः-क. ख. ग. । ७. इतः परं क. ख. मात्रिकासु मुद्रिते भोटे च भिन्नः पङ्क्तिक्रमो यथा—

एवमाद्यास्त्वनन्ताग्रा धर्मधातुसमागमैः ॥५॥
आकाशधातुपर्यन्ताः सर्वबुद्धादयो वराः ।
समाविशन्ति सर्वात्मा सिद्धयैश्वर्यप्रसिद्धिभिः ॥६॥

सर्वतो विश्वविनयं सत्त्वधातुं प्रसाधयेत् ।
विक्रीडति विचित्रैः श्रीवज्रसत्त्वस्तथागतः ॥७॥

रतिक्रीडाविकुर्वितः सर्वतो विश्वसंवरैः ।
सर्वाकाशावकाशः श्रीवज्रसत्त्वः प्रतिष्ठितः ॥८॥

अस्मिन् क्रमे श्लोकस्यैकस्य हानिर्भवति ।



आकाशधातुपर्यन्तैः सर्वतो विश्वसंवरैः ।
सर्वाकाशावकाशैः श्रीवज्रसत्त्वस्तथागतः ॥६॥

विक्रीडति विचित्रैः श्रीरतिक्रीडाविकुर्वितैः ।
सर्वतो विश्वविनयैः सत्त्वधातुं प्रसाधयेत् ॥७॥

एवमाद्यास्त्वनन्ताग्रा धर्मधातुसमासमाः ।
आकाशधातुपर्यन्ताः सर्वबुद्धादयो वराः ॥८॥

सर्वाकाशावकाशे श्रीवज्रसत्त्वे प्रतिष्ठिताः ।
समाविशन्ति सर्वात्मा सिद्धैश्वर्यप्रसिद्धिभिः ॥९॥

इत्याह भगवान् श्रीवज्रसत्त्वः—

सर्वंशुद्धय[1]धिमोक्षेण प्रसह्य बलवानधः ।
पराक्रमक्रमणात् तु सर्वलोकान् प्रमर्दयेत् ॥१०॥

अत्यन्तं[2] दुष्टरौद्राग्रं सत्त्वधातुमनेकधा ।
पापैश्चौरैरवस्कन्धैः सर्वमेव विशोधयेत् ॥११॥

छलेन मायया चैव प्रसह्य बलवानधः ।
पञ्चायुधनिब(बं)न्धैश्च सर्वलोकान् जयेत् तदा ॥१२॥

विजित्य [3]सकलं सिद्धो जगत् स्थावरजङ्गमम् ।
विचित्रविनयोपायैः स्वपराननुपालयेत् ॥१३॥

कामिनीनां भवेत् कामो रौद्राणां रौद्रमुत्तमम् ।
सौम्यानां परमं(मः) सोम्यो[4] हठानां हठविक्रमः ॥१४॥

परमेशं समाक्रम्य प्रसह्य बलवानधः ।
उमादेवीं समाकृष्य[5] चोपभोगैर्भुनक्त्यसौ ॥१५॥

१. द्ध्या-ग, बुद्धा-भो । २. अन्यन्तु-क, मु. । ३. सकला सिद्धि-क. ख. ग. मु. गृहीतपाठस्तु भोटसम्मतः । ४. सौम्यं- क. ख. मु. । ५. कण्ठ्य-ग. ।

नारायणं समाक्रम्य प्रसह्यं बलवानधः ।
रूपिणीं तु समाकृष्य उपभोगैर्भुनक्त्यसौ ॥१६॥

प्रजापतिं समाक्रम्य प्रसह्य बलवानधः ।
प्रशान्तदेवीमासाद्य[1] [2]चोपभोगैर्भुनक्त्यसौ ॥१७॥

कामदेवं समाक्रम्य प्रसह्य बलवानधः[3] ।
रतिप्रीतिधृत्यै[4] स्वयं समाक्रम्य[5] भुनक्त्यसौ[6] ॥१८॥

एवमाद्यास्त्वनन्ताग्रा[7] वज्रकर्माग्रविक्रमाः ।
एवमाद्या[8] विकुर्वन्तिं नानातन्त्रेषु[9] दर्शनात् ॥१९॥

**ज्ञानसिद्धौ प्रभावनिर्देशो[10] नाम अधिमात्रेन्द्रियविधानमष्टादशः ॥**

१. मारुह्य–ख., माकण्ठय–ग. । २. उप–क. ख. मु. । ३. साधनः–क. । ४. धृतै–क. । ५. कण्ठय–ग. । ६. क्ति तदा–क. ग. । ७. अतः परं 'धर्मधातुपर्यन्ता' इत्यधिकः पाठः–क. ख. ग. । ८. माद्यो विकुर्वाणा–ख. ग., र्वाणं–क. । ९. तन्त्र[ निदर्शनात् ]–मु. । १०–देशनो–ख. ग. ।

## ऊनविंशः परिच्छेदः

यस्तु सम्यग् न वेत्त्येवं[1] मिथ्यातत्त्वं[2] सुयोगवान् ।
मृद्विन्द्रियो[3] हि विख्यातस्तत्कृत्यमधुनोच्यते ॥१॥

नमस्कारादिकं सर्वं यत्पूर्वं मार्गमुक्तवान् ।
तत्सर्वमपि कर्तव्यं गाथाः सामाजिकास्तथा ॥२॥

सर्वाकारवरोपेतां झटित्येव स्वदेवताम् ।
निष्पाद्य पूर्ववद् योगी मार्गस्थो जपमारभेत् ॥३॥

अवसाने तु कर्तव्यं सर्वबुद्धाः [4]स औरसाः ।
प्रसादं मम कर्तव्यं शरण्यस्य[5] कृपात्मकाः(कैः) ॥४॥

अनादिकालमद्यापि संसारे संसरन्नहम् ।
खिन्नोऽस्मि सर्वदा दुःखैः सम्यग्ज्ञानमपश्यकः ॥५॥

यथा ज्ञानोदयो[6] भूयात् तथाहं कर्तुमुद्यतः ।
क्रमेणानेन संयुक्तो यदि सम्यक् प्रवर्तते ।
भवेद् ज्ञानोदयं तस्य न मिथ्यामार्गयायिनाम् ॥६॥

**ज्ञानसिद्धौ मध्येन्द्रियविधिनिर्देश एकोनविंशतितमः ॥**

१. व–ख. ग. । २. त्वसु–क. ख. मु. । ३. स मृद्विन्द्रियो–ख. । ४. षडौरसाः–ग. । ५. ण्येऽस्य–क. ख. मु. । ६. दयं कुरुथ–ग. ।

## विंशतितमः परिच्छेदः

मुद्रामण्डलवर्णादिभुजस्थानविभाविताः ।
[1]समाधित्रयमुद्राविद्वाराश्चैव [2]महद्भुजाः ॥१॥

नानाप्रपञ्चनाम्नायाः[3] सर्वे ते मृदवः स्मृताः ।
तेषामपि यथान्यायं ब्रवीमि तत्त्वसम्भवम् ॥२॥

मध्याधिमात्रमार्गेषु प्रतिष्ठाय यथानयम् ।
तन्त्रोक्ता सर्वदा कार्या देवतामन्त्रजापिना[4] ॥३॥

यदि चित्तं समं यस्य ज्ञानं तस्योदयं भवेत् ।
अन्यथा नहि तत्प्राप्तिः कल्पकोटिशतैरपि ॥४॥

सर्वदा चिन्तया यु(मु)क्तो महाकारुण्यवान् सुधीः ।
पूर्वोक्तलक्षणोपेतो योगी ज्ञानवरं[5] लभेत् ॥५॥

मध्यान्तयोर्द्वयोश्चैव भावना[6] मात्रमुख्यता ।
सम्यग् ज्ञानोदयार्थाय [7]प्रोक्ता कृत्यमपश्यता[8] ॥६॥

तत्त्वं विना न बुद्धत्वं तत्त्वं मार्गं विना न च ।
तन्मार्गस्थितयोरेव[9] प्रतिपज्ज्ञानमावहेत् ॥७॥

मार्गभ्रष्टो भवेद् यस्तु करुणाहीनचेतसाम्[10] ।
[11]लाभाद्यर्थं प्रपञ्चात्मा न तेषामुदयो भवेत् ॥८॥

ज्ञानसिद्धौ मृद्विन्द्रियनिर्देशपरिच्छेदो विंशतितमः ॥

१. समाधित्रयचतुर्मुद्रात्रिमुखाश्चैव षड्भुजाः—भो. । २. सहभुजा—ग. । ३. यात्—क. मु. ।
४. योगिना—भो. । ५. घसो भवेत्—ग. । ६. मात्र—क., त्रय्—भो. । ७. प्रोक्तं—क. ख. ग. ।
८. सम्यक् कृत्य वशीभवेत्—भो. । ९. स्थितस्यैव—भो. । १०. चित्तवान्—भो. । ११. रागा—भो. ।

## [ उपसंहारः ]

अमुकस्य इदं गुह्यं सर्वतन्त्रेषु गोपितम् ।
तन्निर्दिष्टं मया सम्यग् योगिनां ज्ञानसिद्धये ॥१॥

वज्रज्ञानवरो योगो येषां नैव हि विद्यते ।
भावनां देवतारूपैः कर्तुमुद्युक्तचेतसाम् ॥२॥

दर्शनं पुस्तकस्यापि न दातव्यं प्रजानता ।
वज्रज्ञानप्रतिक्षेपान्नरकं यान्ति मोहिताः ॥३॥

तेषां नरकहेतुत्वात् सोऽप्यवीचिं व्रजेन्नरः ।
[1]तत्परानर्थसद्भावाद् रक्षणीयमिति ध्रुवम् ॥४॥

अन्यथा समयभ्रंशो भवेदिति प्रकाशितम् ।
योगतन्त्रेष्वनेकेषु सर्वबुद्धैः कृपात्मकैः ॥५॥

विधूतकल्पनाजालं वज्रज्ञानमिदं परम् ।
साधनं वज्रसत्त्वस्य कृतं[2] मार्गं[3] सयुक्तिकम् ॥६॥

साधनोपायिकां कृत्वा यन्मयोपचितं शुभम् ।
तेनास्तु सर्वसत्त्वानां वज्रसत्त्वत्वमुत्तमम् ॥७॥

श्रीमदोड्डियानविनिर्गता ज्ञानसिद्धिर्नाम साधनोपायिका समाप्ता ॥

कृतिरियं श्रीइन्द्रभूतिपादानाम् ॥

१. तपरा—ग. । २. कृतमा—क. ख. मु. । ३. र्गमयु—ग. ।